श्रीगणेशाय नमः ॥ हरिः ॐ नमश्चंडिकायै ॐ मार्कं
डेय उवाच ॥ १ ॥ सावर्णिः सूर्यतनयो यो मनुः कथ्यतेष्टमः ॥
निशामय तदुत्पत्तिं विस्तराद्गदतो मम ॥ २ ॥ महामायानुभा
वेन यथा मन्वंतराधिपः ॥ स बभूव महाभागः सावर्णिस्त
नयो रवेः ॥ ३ ॥ स्वारोचिषेंतरे पूर्वं चैत्रवंशसमुद्भवः ॥ सुर
थो नाम राजाभूत्समस्ते क्षितिमंडले ॥ ४ ॥ तस्य पालयतः
सम्यक् प्रजाः पुत्रानिवौरसान् ॥ बभूवुः शत्रवो भूपाः
कोलाविध्वंसिनस्तदा ॥ ५ ॥ तस्य तैरभवद्युद्धमतिप्रबल
दंडिनः ॥ न्यूनैरपि स तैर्युद्धे कोलाविध्वंसिभिर्जितः ॥ ६ ॥

ततःस्वपुरमायातोनिजदेशाधिपोभवत॥ आक्रांतः
समहाभागस्तैस्तदाप्रबलारिभिः॥७॥ आमात्यैर्बलिभि
र्दुष्टैर्दुर्बलस्यदुरात्मभिः॥ कोषोबलंचापहृतंतत्रापिस्व
पुरेततः॥८॥ ततोमृगयाव्याजेनहृतःस्वाम्यःसभूपतिः॥
एकाकीहयमारुह्यजगामगहनंवनं॥९॥ सतत्राश्रम
मद्राक्षीद्विजवर्यस्यमेधसः॥ प्रशांतःश्वापदाकीर्णं
मुनिशिष्योपशोभितं॥१०॥ तस्थौकंचित्सकालंचमुनि
नातेनसत्कृतः॥ इतश्चेतश्चविचरंस्तस्मिन्मुनिवरा
श्रमे॥११॥ सोचिंतयत्तदातत्रममत्वाकृष्टचेतनः॥१२॥

॥३॥

राजोवाच ॥२६॥ यैर्निरस्तो भवाल्लुब्धैः पुत्रदारादिभिर्धनैः ॥२७॥
तेषु किं भवतः स्नेहमनुबध्नाति मानसं ॥२८॥ वैश्य उवाच ॥
२९॥ एवमेतद्यथा प्राह भवानस्मद्गतं वचः ॥ किं करोमि न
बध्नाति मम निष्ठुरतां मनः ॥३०॥ यैः संत्यज्य पितृस्नेहं
धनलुब्धैर्निराकृतः ॥ पतिस्वजनहार्दं च हार्दि तेष्वेव मे
मनः ॥३१॥ किमेतन्नाभिजानामि जानन्नपि महामते ॥
यत्प्रेमप्रवणं चित्तं विगुणेष्वपि बंधुषु ॥३२॥ तेषां कृ
श्वा ते मे नि सो दौर्मनस्यं च जायते ॥३३॥ करोमि किं
यन्न मनस्तेष्वप्रीतिषु निष्ठुरं ॥३४॥ मार्कंडेय उवाच ॥

३५ ततस्तौ सहितौ विप्र तं मुनिं समुपस्थितौ ॥३६॥ समा
धिर्नाम वैश्योसौ स च पार्थिवसत्तमः ॥३७॥ कृत्वा
तु तौ यथान्यायं यथार्हं तेन संविदं ॥ उपविष्टौ कथाः का
श्चिच्चक्रतुर्वैश्यपार्थिवौ ॥३८॥ राजोवाच ॥३९॥ भग
वंस्त्वामहं प्रष्टुमिच्छाम्येकं वदस्व तत् ॥४०॥ दुःखाय य
न्मे मनसः स्वचित्तायत्ततां विना ॥४१॥ ममत्वं मम राज्य
स्य राज्यांगेष्वखिलेष्वपि ॥ जानतोपि यथाज्ञस्य किमेत
न्मुनिसत्तम ॥४२॥ अयं च निकृतः पुत्रैर्दारैर्भृत्यैस्तथोज्झ
ितः ॥ स्वजनेन च संत्यक्तस्तेषु हार्दी तथाप्यति ॥४३॥

॥४॥ एवमेष तथाहं च द्वावप्यत्यंतदुःखितौ॥ दृष्टदोषेपि विषये
ममत्वाकृष्टमानसौ॥४४॥ तत्केनैतन्महाभाग यन्मोहो
ज्ञानिनोरपि॥ ममास्य च भवत्येषा विवेकांधस्य मूढता॥ ॥४५॥
[redacted]॥४६॥ ज्ञानमस्ति समस्तस्य जंतोर्विषयगो
चरे॥ विषयश्च महाभाग याति चैवं पृथक् पृथक्॥ दि
वांधाः प्राणिनः केचिद्रात्रावंधास्तथापरे॥ केचिद्दिवा
तथा रात्रौ प्राणिनस्तुल्यदृष्टयः॥४८॥ ज्ञानिनो मनुजाः
सत्यं किंतु ते नहि केवलं॥ यतो हि ज्ञानिनः सर्वे पशुप ॥४॥
क्षिमृगादयः॥४९॥ ज्ञानं च तन्मनुष्याणां यत्तेषां म

प

गपक्षिणां॥ मनुष्याणां च यत्तेषां तुल्यमन्यत्तथोभयोः॥५०॥
ज्ञानेपि सति पश्यैतान्पतंगाञ्छावचंचुषु॥ कणमोक्षादृ
तान्मोहात्पीड्यमानानपि क्षुधा॥५१॥ मानुषा मनुजव्या
घ्र साभिलाषाः सुतान्प्रति॥ लोभात्प्रत्युपकाराय नन्वेते
त्किं न पश्यसि॥५२॥ तथापि ममतावर्त्ते मोहगर्त्ते निपाति
ताः॥ महामायाप्रभावेण संसारस्थितिकारिणः॥५३॥
तन्नात्र विस्मयः कार्यो योगनिद्रा जगत्पतेः॥ महामाया
हरेश्चैतत्तया संमोह्यते जगत्॥५४॥ ज्ञानिनामपि चेतां
सि देवी भगवती हि सा॥ बलादाकृष्य मोहाय महामा

॥५॥ या प्रयच्छति ॥ ५५ ॥ तया विसृज्यते विश्वं जगदेतच्चराचरं ॥
सैषा प्रसन्ना वरदा नृणां भवति मुक्तये ॥ ५६ ॥ सा विद्या प
रमा मुक्तेर्हेतुभूता सनातनी ॥ ५७ ॥ संसारबंधहेतुश्च
सैव सर्वेश्वरेश्वरी ॥ ५८ ॥ राजोवाच ॥ ५९ ॥ भगवन्का
हि सा देवी महामायेति यां भवान् ॥ ब्रवीति कथमुत्पन्ना
सा कर्मास्याश्च किं द्विज ॥ ६० ॥ यत्स्वभावा च सा देवी य
त्स्वरूपा यदुद्भवा ॥ तत्सर्वं श्रोतुमिच्छामि त्वत्तो ब्रह्मवि
दांवर ॥ ६२ ॥ ऋषिरुवाच ॥ ६३ ॥ नित्यैव सा जगन्मू ॥५॥
र्तिस्तया सर्वमिदं ततं ॥ ६४ ॥ तथापि तत्समुत्पत्तिर्बहु

धाश्रूयतां मम॥ ६५॥ देवानां कार्यसिध्यर्थमाविर्भवतिसाय
दा॥ उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते॥ ६६॥ यो
गनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते॥ आस्तीर्य शेषमभ
जत्कल्पांते भगवान्प्रभुः॥ ६७॥ तदा द्वावसुरौ घोरौ विख्या
तौ मधुकैटभौ॥ विष्णुकर्णमलोद्भूतौ हंतुं ब्रह्माणमुद्यतौ॥
६८॥ स नाभिकमले विष्णोः स्थितो ब्रह्मा प्रजापतिः॥ दृ
ष्ट्वा तावसुरौ चोग्रौ प्रसुप्तं च जनार्दनं॥ ६९॥ तुष्टाव यो
गनिद्रां तामेकाग्रहृदयस्थितः॥ विबोधनार्थाय हरे
र्हरिनेत्रकृतालयां॥ ७०॥ विश्वेश्वरीं जगद्धात्रीं स्थितिसं

।।६।। हारकारिणी।। निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः।।७१।।
ब्रह्मोवाच।।७२।। त्वंस्वाहा त्वंस्वधा त्वं हि वषट्कारस्वरा
त्मिका।। सुधात्वमक्षरे नित्ये त्रिधा मात्रात्मिका स्थिता।।७३।।
अर्धमात्रास्थिता नित्या यानुच्चार्या विशेषतः।। त्वमे
व सा त्वं सावित्री त्वं देवी जननी परा।। त्वयैव धार्यते स
र्वं त्वयैतत्सृज्यते जगत।। त्वयैतत्पाल्यते देवी त्वमत्स्य
ते च सर्वदा।।७५।। विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च ।।६।।
पालने।। तथा संहृतिरूपा ते जगतोस्य जगन्मये।।७६।।
महाविद्या महामाया महामेधा महास्मृतिः।। महामो

हाचभवतीमहादेवीमहासुरी ॥७७॥ प्रकृतिस्त्वंचसर्वस्य
गुणत्रयविभाविनी ॥ कालरात्रिर्महारात्रिर्मोहरात्रिश्च
दारुणा ॥७८॥ त्वंश्रीस्त्वमीश्वरी त्वं ह्रीस्त्वंबुद्धिर्बोधलक्षणा ॥
॥ लज्जापुष्टिस्तथातुष्टिस्त्वंशांतिःक्षांतिरेवच ॥७९॥ खड्गिनी
शूलिनीघोरागदिनीचक्रिणीतथा ॥ शंखिनीचापिनीबा
णभुशुंडीपरिघायुधा ॥८०॥ सौम्यासौम्यतराशेषसौम्येभ्य
स्त्वतिसुंदरी ॥ परापराणांपरमात्वमेवपरमेश्वरी ॥८१॥
यच्चकिंचित्क्वचिद्वस्तुसदसद्वाखिलात्मिके ॥ तस्यसर्वस्य
याशक्तिःसात्वंकिंस्तूयसेतदा ॥८२॥ ययात्वयाजगत्स्रष्टा

च ॥९९॥ वंचिताभ्यामिति तदा सर्वमापोमयं जगत् ॥ विलो-
क्य ताभ्यां गदितो भगवान्कमलेक्षणः ॥१००॥ आवां जहि न य-
त्रोर्वी सलिलेन परिप्लुता ॥१॥ ऋषिरुवाच ॥२॥ तथेत्युक्त्वा भग-
वता शंखचक्रगदाभृता ॥ कृत्वा चक्रेण वै छिन्ने जघने शि-
रसी तयोः ॥३॥ एवमेषा समुत्पन्ना ब्रह्मणा संस्तुता स्वयं ॥
प्रभावमस्या देव्यास्तु भूयः शृणु वदामि ते ॥४॥ इति मा-
र्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमहात्म्ये मधुकैटभ-
वधः समाप्तः १ ऋषिरुवाच ॥५॥ देवासुरमभूद्युद्धं पू- ॥८॥
र्णमब्दशतं पुरा ॥ महिषेऽसुराणामधिपे देवानां च पुरंदरे ॥६॥

तत्रासुरैर्महावीर्यैर्देवसैन्यंपराजितं॥ जित्वाचसकला
न्देवानिंद्रोभून्महिषासुरः॥७॥ततः पराजितादेवाः
पद्मयोनिंप्रजापतिं॥ पुरस्कृत्यगतास्तत्रयत्रेशगरु
डध्वजौ॥८॥ यथावृत्तं तयोस्तद्वन्महिषासुरचेष्टितं॥
त्रिदशाः कथयामासुर्देवाभिभवविस्तरं॥९॥सूर्येंद्रा
ग्न्यनिलेंदूनांयमस्यवरुणस्यच॥अन्येषांचाधिका
रान्सस्वयमेवाधितिष्ठति॥१०॥ स्वर्गान्निराकृताः
सर्वेतेनदेवगणाभुवि॥ विचरंतियथामर्त्यामहिषे
णदुरात्मना॥११॥ एतद्वःकथितंसर्वममरारिविचे

वधस्तस्य

१ ष्ठितं ॥ शरणं च प्रपन्नाः स्मो विधिश्चिंत्यतां ॥१२॥ इत्थं निशम्य दे
वानां वचांसि मधुसूदनः ॥ चकार कोपं शंभुश्च भ्रकुटीकु
टिलाननौ ॥१३॥ ततोतिकोपपूर्णस्य चक्रिणो वदनात्ततः ॥
निश्चक्राम महत्तेजो ब्रह्मणः शंकरस्य च ॥१४॥ अन्येषां
चैव देवानां शक्रादीनां शरीरतः ॥ निर्गतं सुमहत्तेजस्तच्चै
क्यं समगच्छत ॥१५॥ अतीव तेजसः कूटं ज्वलंतमिव पर्व
तं ॥ ददृशुस्ते सुरास्तत्र ज्वालाव्याप्तदिगंतरं ॥१६॥ अतुलं त
त्र तत्तेजः सर्वदेवशरीरजं ॥ एकस्थं तदभून्नारी व्याप्तलो
कत्रयं त्विषा ॥१७॥ यदभूच्छांभवं तेजस्तेनाजायत तन्मु ९

खं ॥ याम्येन चाभवन केशा बाहवो विष्णुतेजसा ॥१८॥ सौम्ये
नस्तनयोर्युग्मं मध्यं चैंद्रेण चाभवत् ॥ वारुणेन च जंघोरू
नितंबस्तेजसा भुवः ॥१९॥ ब्रह्मणस्तेजसा पादौ तदंगुल्यो
र्कतेजसा ॥ वसूनां च करांगुल्यः कौबेरेण च नासिका ॥
२० तस्यास्तु दंताः संभूताः प्राजापत्येन तेजसा ॥ नयनत्रि
तयं जज्ञे तथा पावकतेजसा ॥२१॥ भ्रुवौ च संध्ययोस्तेजः
श्रवणावनिलस्य च ॥ अन्येषां चैव देवानां संभवस्तेजसां
शिवा ॥२२॥ ततः समस्तदेवानां तेजोराशिसमुद्भवां ॥ तां
विलोक्य मुदं प्रापुरमरा महिषार्दिताः ॥२३॥ ततो देवा द

दुस्तस्यै स्वानि स्वान्यायुधानि च ॥ शूलं शूलाद्विनिष्कृष्य ददौ
तस्यै पिनाकधृक् ॥२४॥ चक्रं च दत्तवान्कृष्णः समुत्पाद्य
स्वचक्रतः ॥ शंखं च वरुणः शक्तिं ददौ तस्यै हुताशनः ॥२५॥
मारुतो दत्तवांश्चापं बाणपूर्णे तथेषुधी ॥ वज्रमिंद्रः समु
त्पाद्य कुलिशादमराधिपः ॥२६॥ ददौ तस्यै सहस्राक्षो
घंटामैरावताद्गजात् ॥ कालदंडाद्यमो दंडं पाशं चांबुपति
र्ददौ ॥२७॥ प्रजापतिश्चाक्षमालां ददौ ब्रह्मा कमंडलुं ॥
समस्तरोमकूपेषु निजरश्मीन्दिवाकरः ॥२८॥ कालश्च द
त्तवान्खड्गं तस्याश्चर्म च निर्मलं ॥ क्षीरोदश्चामलं

१०

हारमज्जरेच्च तथांबरो ॥२९॥ चूडामणिं तथा दिव्यं कुंडले कट
कानिच ॥ अर्धचंद्रं तथाशुभ्रं केयूरान्सर्वबाहुषु ॥३०॥
नूपुरौ विमलौ तद्वद्ग्रैवेयकमनुत्तमं ॥ अंगुलीयकर
त्नानि समस्तास्वंगुलीषुच ॥३१॥ विश्वकर्मा ददौ तस्यै
परशुंचातिनिर्मलं ॥ अस्त्राण्यनेकरूपाणि तथाभेद्यंचदं
शनं ॥३२॥ अम्लानपंकजां मालां शिरस्युरसिचापरां ॥ अ
ददज्जलधिस्तस्यै पंकजंचातिशोभनं ॥३३॥ हिमवान्वा
हनं सिंहं रत्नानि विविधानिच ॥ ददावशून्यं सुरयापान

।।२२।।

पात्रं धनाधिपः ॥३४॥ शेषश्च सर्वनागेशो महामणिविभू
षितं॥ नागहारं ददौ तस्यै धत्ते यः पृथिवीमिमां ॥३५॥ अन्यै
रपि सुरैर्देवी भूषणैरायुधैस्तथा॥ संमानिता ननादोच्चैः
साट्टहासं मुहुर्मुहुः ॥३६॥ तस्यानादेन घोरेण कृत्स्नमापू
रितं नभः ॥ अमायतातिमहता प्रतिशब्दो महानभूत् ॥३७॥
चुक्षुभुः सकला लोकाः समुद्राश्च चकंपिरे ॥ चचाल व
सुधा चेलुः सकलाश्च महीधराः ॥३८॥ जयेति देवाश्च ।।२२।।
मुदा तामूचुः सिंहवाहिनी ॥ तुष्टुवुर्मुनयश्चैनां भक्तिन

स

म्रात्समूतोयः ॥३९॥ दृष्ट्वासमस्तं संक्षुब्धं त्रैलोक्यममरारयः॥ सं
सन्नद्धाखिलसैन्यास्ते समुत्तस्थुरुदायुधाः ॥४०॥ आः किमे
तदितिक्रोधादाभाष्य महिषासुरः ॥ अभ्यधावत तं शब्द
मशेषैरसुरैर्वृतः ॥४१॥ स ददर्श ततो देवीं व्याप्तलोकत्र
यां त्विषा ॥ पादाक्रांत्या नतभुवं किरीटोल्लिखितांबरां ॥४२॥
क्षोभिताशेषपातालां धनुर्ज्यानिस्वनेन तां ॥ दिशोभुज
सहस्रेण समंताद्व्याप्य संस्थितां ॥४३॥ ततः प्रववृते युद्धं त
यादेव्यासुरद्विषां ॥ शस्त्रास्त्रैर्बहुधामुक्तैरादीपितदिगं
तरं ॥४४॥ महिषासुरसेनानीश्चिक्षुराख्यो महासुरः ॥

॥१२॥

पृथुधेवामरश्चान्यैश्चतुरंगबलान्वितः ॥४५॥ रथानामयु
तैः षड्भिरुदग्राख्यो महास्फुरः ॥ अयुध्यतायुतानां च स
हस्रेण महाहनुः ॥४६॥ पंचशद्भिश्च नियुतैरसिलोमा
महास्फुरः ॥ अयुतानां शतैः षड्भिर्बाष्कलो युयुधे रणे ॥४७॥
गजवाजिसहस्रौघैरनेकैः परिवारितः ॥ वृतो रथानां
कोट्या च युद्धे तस्मिन्नयुध्यत ॥४८॥ विडालाख्योयुता
नां च पंचाशद्भिरथायुतैर्गहयैर्वृतः ॥ युयुधुः संयुगे
देव्या सह तत्र महास्फुराः ॥५०॥ कोटिकोटिसहस्रै ॥१२॥
स्तु रथानां दंतिनां तथा ॥ हयानां च वृतो युद्धे तत्राभूत्से पु

× तैः ॥ युयुधे संयुगे तत्र रथानां परिवारितः ॥४९॥ अन्ये च तत्रायुतशो ×
रथ ×३

द्विषासुरः ॥५१॥ तोमरैर्भिंदिपालैश्च शक्तिभिर्मुसलैस्तथा ॥
युयुधुः संयुगे देव्या खड्गैः परशुपट्टिशैः ॥५२॥ केचिच्च चि
क्षिपुः शक्तीः केचित्पाशांस्तथापरे ॥ देवीं खड्गप्रहारैस्तु ते
तां हंतुं प्रचक्रमुः ॥५३॥ सापि देवी ततस्तानि शस्त्राण्यस्त्राणि
चंडिका ॥ लीलयैव प्रचिच्छेद निजशस्त्रास्त्रवर्षिणी ॥५४॥ अ
नायस्तानना देवी स्तूयमाना सुरर्षिभिः ॥ मुमोचासुरदे
हेषु शस्त्राण्यस्त्राणि चेश्वरी ॥५५॥ सोपि क्रुद्धो धुतसटो
देव्या वाहनकेसरी ॥ चचारासुरसैन्येषु वनेष्विव हुताश
नः ॥५६॥ निश्वासान्मुमुचे यांश्च युध्यमाना रणेंबिका ॥

तएवसद्यः संभूतागणाः शतसहस्रशः ॥५७॥ युयुधुस्ते
परशुभिर्भिंदिपालसिपट्टिशैः ॥ नाशयंतोसुरगणान्देवी
शक्त्युपबृंहिताः ॥५८॥ अवादयंतपटहान् गणाः शंखां
स्तथापरे ॥ मृदंगांश्चतथैवान्येतस्मिन्युद्धमहोत्सवे ॥५९॥
ततोदेवीत्रिशूलेनगदयाशक्तिवृष्टिभिः ॥ खड्गादिभिश्च
शतशोनिजघानमहासुरान् ॥६०॥ पातयामासचैवा
न्यान्घंटास्वनविमोहितान् ॥ असुरान्भुविपाशेनबध्वा
चान्यानकर्षत ॥६१॥ केचिद्द्विधाकृतास्तीक्ष्णैः खड्गपा ॥१३॥
तैस्तथापरे ॥ विपोथितानिपातेनगदयाभुविशेरते ॥६२॥

वेमुश्च केचिद्रुधिरं मुसलेन भृशं हताः॥ केचिन्निपातिता
भूमौ भिन्नाः शूलेन वक्षसि॥६३॥ निरंतराः शरौघेण कृताः
केचिद्रणाजिरे॥ सेनानुकारिणः प्राणान्मुमुचुस्त्रिदशा
र्दनाः॥६४॥ केषांचिद्बाहवश्छिन्नाश्छिन्नग्रीवास्तथापरे॥
शिरांसि पेतुरन्येषामन्ये मध्ये विदारिताः॥६५॥ विछिन्नजं
घास्त्वपरे पेतुरुर्व्यां महासुराः। एकबाह्वक्षिचरणाः केचिद्दे
व्या द्विधा कृताः॥६६॥ छिंनेपि चान्ये शिरसि पतिताः पुनरुत्थि
ताः॥ ननृतुश्चापरे तत्र युद्धे तूर्यलयाश्रिताः॥६७॥ कबं
धाश्छिन्नशिरसः खड्गशक्त्यृष्टिपाणयः॥ तिष्ठ तिष्ठेति

॥१४॥

भाषंतोदेवीमन्येमहासुराः ॥६८॥ पातितैरथनागाश्वैर
सुरैश्चवसुंधरा॥ अगम्यासाभवत्तत्रयत्राभूत्समहारणः
६९ शोणितौघामहानद्यःसद्यस्तत्रविसुस्रुवुः मध्येचासु
रसैन्य स्यवारणासुरवाजिनां ७० क्षणेनतन्महासैन्य
मसुराणांतथांबिका॥ निन्येक्षयंयथावह्निस्तृणदारुमहा
चयं ७१ सचसिंहोमहानादमुत्सृजन्धुतकेसरःश
रीरेभ्योमरारीणामसूनिवविचिन्वति ७२ देव्यागणै
श्चतैस्तत्रकृतंयुद्धंतथासुरैः॥ यथैषांतुतुषुर्देवाःपु ॥१४॥
ष्पवृष्टिमुचोदिवि ७३ इतिमार्कंडेयपुराणेसावर्णि

के मन्वंतरे देवीमहात्म्ये २ ऋषिरुवाच। १४ निहन्यमानं
तत्सैन्यमवलोक्य महासुरः॥ सेनानीश्चिक्षुरः कोपाद्य
यौ योद्धुमथांबिकां॥१५॥ स देवीं शरवर्षेण ववर्ष समरेसु
रः यथा मेरुगिरेः शृंगं तोयवर्षेण तोयदः॥१६॥ तस्य छि
त्वा ततो देवी लीलयैव शरोत्करान्॥ जघान तुरगान्बाणै
र्यंतारं चैव वाजिनां॥१७॥ चिच्छेद च धनुः सद्यो ध्वजं चाति
समुच्छ्रितं॥ विव्याध चैव गात्रेषु छिन्नधन्वानमाशुगैः॥१८॥
स छिन्नधन्वा विरथो हताश्वो हतसारथिः॥ अभ्यधाव
त तां देवीं खड्गचर्मधरोसुरः॥१९॥ सिंहमाहत्य खड्गेन ती

॥१५॥

क्ष्णधारेणमूर्धनि ॥ आजघानभुजे सव्ये देवीमप्यतिवेगवा
न् ॥ ८० ॥ तस्याः खड्गोभुजंप्राप्य पफालनृपनंदन ततोजग्रा
ह शूलं सकोपादरुणलोचनः ॥ ८१ ॥ चिक्षेपचततस्तत्तु
भद्रकाल्यां महासुरः ॥ जाज्वल्यमानं तेजोभी रविबिंब
मिवांबरात् ॥ ८२ ॥ दृष्ट्वा तदापतच्छूलं देवी शूलममुंचत ।
तच्छूलं शतधातेन नीतं सच महासुरः ॥ ८३ ॥ हते तस्मि
न्महावीर्ये महिषस्य चमूपतौ ॥ आजगाम गजारूढ
श्चामरस्त्रिदशार्दनः ॥ ८४ ॥ सोपि शक्तिं मुमोचाथ देव्या ॥ १५ ॥
स्तामंबिका द्रुतं ॥ हुंकाराभिहतां भूमौ पातयामास निष्प्र

भां॥८५॥ भग्नां शक्तिं निपतितां दृष्ट्वा क्रोधसमन्वितः। चिक्षेप
चामरः शूलं बाणैस्तदपि साच्छिनत्॥८६॥ ततः सिंहः समु
त्पत्य गजकुंभांतरे स्थितः॥ बाहुयुद्धेन युयुधे तेनोच्चैस्त्रि
दशारिणा॥८७॥ युध्यमानौ ततस्तौ तु तस्मान्नागान्महीं
गतौ॥ युयुधातेतिसंरब्धौ प्रहारैरतिदारुणैः॥८८॥ ततो
वेगात्खमुत्पत्य निपत्य च मृगारिणा॥ करप्रहारेण शि
रश्चामरस्य पृथक्कृतं॥८९॥ उदग्रश्च रणे देव्या शि
लावृक्षादिभिर्हतः। दंतमुष्टितलैश्चैव करालश्च निपा
तितः॥९०॥ देवी क्रुद्धा गदापातैश्चूर्णयामास चोद्धतं॥

बाष्कलं भिंदिपालेन बाणैस्ताम्रं तथांधकं ॥११॥ उग्रास्य
मुग्रवीर्यं च तथैव च महाहनुं ॥ त्रिनेत्रा च त्रिशूलेन ज
घान परमेश्वरी ॥१२॥ विडालस्यासिना कायात्पातया
मास वै शिरः ॥ दुर्धरं दुर्मुखं चोभौ शरैर्निन्ये यमक्षयं ॥१३॥
एवं संक्षीयमाणे तु स्वसैन्ये महिषासुरः ॥ माहिषेण स्व
रूपेण त्रासयामास तान्गणान् ॥१४॥ कांश्चित्तुंडप्रहा
रेण खुरक्षेपैस्तथापरान् ॥ लांगूलताडितांश्चान्या
न्शृंगाभ्यां च विदारितान् ॥१५॥ वेगेन कांश्चिदपरान्ना
देन भ्रमणेन च ॥ निश्वासपवनेनान्यान्पातयामास ॥३६॥

भूतले ॥ १६ ॥ निपात्य प्रमथानीकमभ्यधावत सोऽसुरः ॥
सिंहं हन्तुं महादेव्याः कोपं चक्रे ततोऽम्बिका ॥ १७ ॥ सोऽपि
कोपान्महावीर्यः खुरक्षुण्णमहीतलः ॥ शृंगाभ्यां
पर्वतानुच्चांश्चिक्षेप च ननाद च ॥ १८ ॥ वेगभ्रमणवि
क्षुण्णा मही तस्य व्यशीर्यत ॥ लांगूलेनाहतश्चाब्धिः प्लाव
यामास सर्वतः ॥ १९ ॥ धुतशृंगविभिन्नाश्च खंडखंडं
ययुर्घनाः ॥ श्वासानिलास्ताः शतशो निपेतुर्नभसो
ऽचलाः ॥ २०० ॥ इति क्रोधसमाध्मातमापतंतं महासुरं ॥
दृष्ट्वा सा चंडिका कोपं तद्वधाय तदाकरोत् ॥ १ ॥ सा क्षिप्त्वा

तस्यवै पाशं तं बबंध महासुरं ॥ तत्याज माहिषं रूपं सोपि
बद्धो महामृधे ॥२९॥ ततः सिंहोभवत्सद्यो यावत्तस्यांबिका
शिरः ॥ छिनत्ति तावत्पुरुषः खड्गपाणिरदृश्यत ॥ अत
एवाशु पुरुषं देवी चिच्छेद सायकैः ॥ तं खड्गचर्मणा
सार्धं ततः सोभून्महागजः ॥३१॥ करेण च महासिंहं तं
चकर्ष जगर्ज च ॥ कर्षतस्तु करं देवी खड्गेन निरकृंत
त ॥३२॥ ततो महासुरो भूयो माहिषं वपुरास्थितः ॥ त
थैव क्षोभयामास त्रैलोक्यं सचराचरं ॥३३॥ ततः क्रु ॥१८॥
द्धा जगन्माता चंडिका पानमुत्तमं ॥ पपौ पुनः पुन

श्चैव जहासारुणलोचना ॥७॥ ननर्द चासुरः सोपि बलवीर्य
मदोद्धतः ॥ विषाणाभ्यां च विक्षेप चंडिकां प्रति भूधरान् ॥
सा च तान्प्रहितांस्तेन चूर्णयंती शरोत्करैः ॥९॥ उवाच तं म
दोद्धूत मुखरागाकुलाक्षरं ॥ देव्युवाच ॥१०॥ गर्ज गर्ज क्ष
णं मूढ मधु यावत्पिबाम्यहं ॥ मया त्वयि हतेत्रैव गर्जि
ष्यंत्याशु देवताः ॥११॥ ऋषिरुवाच ॥१२॥ एवमुक्त्वा स
मुत्पत्य सारूढा तं महासुरं ॥ पादेनाक्रम्य कंठे च शूलेनै
नमताडयत् ॥१३॥ ततः सोपि पदाक्रांतस्तया निजमु
खात्ततः ॥ अर्धनिष्क्रांत एवाति देव्या वीर्येण संवृतः ॥१४॥

॥३८॥

अर्धनिष्क्रांतएवासौयुध्यमानोमहासुरः तयामहा
सिनादेव्या शिरश्छित्वा निपातितः ॥१५॥ ततोहाहाकृतं
सर्वं दैत्यसैन्यंननाशतत् ॥ प्रहर्षंचपरंजग्मुः सकला
देवतागणाः ॥१६॥ तुष्टुवुः स्तांसुरादेवीं सहदिव्यैर्मह
र्षिभिः ॥ जगुर्गंधर्वपतयोननृतुश्चाप्सरोगणाः ॥१७
इतिमार्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवीमहात्म्ये
महिषासुरवधः ३ ऋषिरुवाच ॥१८॥ शक्रादयः सु
रगणानिहतेतिवीर्येतस्मिन्दुरात्मनिसुरारिबले ॥१८॥
चदेव्या ॥ तांतुष्टुवुः प्रणतिनम्रशिरोधरांसावाग्भिः प्र

हर्षपुलकोद्गमचारुदेहाः॥२॥ देव्या ययाततमिदं जगदा
त्मशक्त्या निःशेषदेवगणशक्तिसमूहमूर्त्या ॥ तामंबि
कामखिलदेवमहर्षिपूज्यां भक्त्यानताः स्मविदधातु शु
भानि सा नः॥३॥ यस्याः प्रभावमतुलं भगवाननंतो ब्रह्मा
हरश्च न हि वक्तुमलं बलं च ॥ सा चंडिकाखिलजगत्परिपा
लनाय नाशाय चाशुभभयस्य मतिं करोतु॥४॥ या श्रीः
स्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनां कृतधियां
हृदयेषु बुद्धिः॥ श्रद्धा सतां कुलजनप्रभवस्य लज्जा तां
त्वां नताः स्म परिपालय देवि विश्वं॥५॥ किं वर्णयाम तव

॥१९॥

रूपमचिंत्यमेतत्किंचातिवीर्यमसुरक्षयकारि भूरि किं
चाहवेषु चरितानि तवाद्भुतानि सर्वेषु देव्यसुरदेवगणा
दिकेषु ॥२३॥ हेतुः समस्तजगतां त्रिगुणापि दोषैर्न ज्ञाय
से हरिहरादिभिरप्यपारा ॥ सर्वाश्रयाखिलमिदं जग
दंशभूतमव्याकृता हि परमा प्रकृतिस्त्वमाद्या ॥२४॥ यस्याः
समस्तसुरता समुदीरणेन तृप्तिं प्रयाति सकलेषु मखे
षु देवी स्वाहासि वै पितृगणस्य च तृप्तिहेतुरुच्चार्यसे त्व ॥१८॥
मत एव जनैः स्वधा च ॥२५॥ या मुक्तिहेतुरविचिंत्यमहाव्र

तो च अभ्य[illegible]स्यसे स्कनियतेंद्रियतत्वसारैः ॥ मोक्षार्थि
भिर्मुनिभिरस्तसमस्तदोषैर्विद्यासि सा भगवती परमा
हि देवी ॥९॥ शब्दात्मिका स्कविमलर्ग्यजुषां निधानमुद्गी
थरम्यपदपाठवतां च साम्नां ॥ देवी त्रयी भगवती भव
भावनाय वार्ता च सर्वजगतां परमार्तिहंत्री ॥१०॥ मेधासि
देवि विदिताखिलशास्त्रसारा दुर्गासि दुर्गभवसागरनौ
रसंगा ॥ श्रीः कैटभारिहृदयैककृताधिवासा गौरी त्व
मेव शशिमौलिकृतप्रतिष्ठा ॥११॥ ईषत्सहासममलं परि

॥२७॥

पूर्णचंद्रबिंबानुकारिकनकोत्तमकांतिकांतं ॥ अत्यद्भुतं
प्रहृतमात्तरुषा तथापि वक्त्रं विलोक्य सहसा महिषासु
रेण ।११। दृष्ट्वा तु देवि कुपितं भ्रुकुटीकरालमुद्यच्छशां
कसदृशच्छवि यन्न सद्यः प्राणान्मुमोच महिषस्तद
तीव चित्रं कैर्जीव्यते हि कुपितांतकदर्शनेन ।१२। देवि प्रसीद
परमा भवती भवाय सद्यो विनाशयसि कोपवती कुलानि ॥
विज्ञातमेतदधुनैव यदस्तमेतन्नीतं बलं सुविपुलं महि
षासुरस्य ।१३। ते संमता जनपदेषु धनानि तेषां तेषां ॥२०॥

यशांशिनचसीदतिधर्मवर्गः ॥धन्यास्तएवनिभृतात्म
जभृत्यदारायेषांसदाभ्युदयदाभवतीप्रसन्ना॥३२॥ध
र्म्यांपिदिवसिकलागनिसदेवकर्माण्यत्यादतः प्रतिदिनं
स्कृतीकरोतिस्वर्गप्रयातिचततोभवतीप्रसादाल्लो
कत्रयेपिफलदाननुदेवितेना॥३३॥दुर्गेस्मृताहरसिभी
तिमशेषजंतोः स्वस्थैः स्मृतामतिमतीवशुभांददासि॥
दारिद्र्यदुःखभयहारिणिकात्वदन्यासर्वोपकारकरणा
यसदार्द्रचित्ता॥३४॥एभिर्हतैर्जगदुपैतिसुखंतथैतेकु
र्वंतुनामनरकायचिरायपापां संग्राममृत्युमधिग

म्यदिवं भयां तु मत्वेति न्त्वमहितान्वि निहंसि देवि ॥२५॥ दृष्ट्वै
व किं न भवती प्रकरोति भस्म सर्वासुरानरि षु यत्प्रहि
णो शिरास्त्रं ॥ लोकान्प्रयांतु रिपवोपि हि शस्त्रपूता इ
थं मतिर्भवति तेष्वपि तेतिसाध्वी ॥२६॥ खड्गप्रभानिक
रविस्फुरपैस्तथोग्रैः शूलाग्रकांतिनिवहेन दृशोसु
रापां यन्नागता विलयमंशुमदिंदुखंडयोग्याननं
क तव विलोकयतां तदेतत् ॥२७॥ दुर्वृत्तवृत्तशमनं तव दे
वि शीलं रूपं तथैतदविचिंत्यमतुल्यमन्यैः ॥ वीर्यं च ।२१।।
हंतृहृतदेवपराक्रमाणां वैरिष्वपि प्रकटितैव दयात्व

येषां।।३८।। केनोपमा भवतु तेस्य पराक्रमस्य रूपं च शत्रु
भयकार्यतिहारि कुत्र।। चित्ते कृपा समरनिष्ठुरता च दृष्टा
त्वय्येव देवि वरदे भुवनत्रयेपि।।३९।। त्रैलोक्यमेतदखि
लं रिपुनाशनेन त्रातं त्वया समरमूर्धनि ते पि हत्वा नी
ता दिवं रिपुगणा भय मप्यपास्तमस्माकमुन्मदसु
रारिभवन्नमस्ते।।४०।। शूलेन पाहि नो देवि पाहि खड्गेन
चांबिके घंटास्वनेनः पाहि चापज्यानिःस्वनेन च।।४१।।
प्राच्यां रक्ष प्रतीच्यां च चंडिके रक्ष दक्षिणे।। भ्रामणेना
त्मशूलस्य उत्तरस्यां तथेश्वरि।।४२।। सौम्यानि यानि रू

॥२२॥

पाणि त्रैलोक्ये विचरंति ते यानि चात्यर्थघोराणि तै रक्षा
स्मांस्तथा भुवं॥४३॥ खड्गशूलगदादीनि यानि चास्त्राणि
तेंबिके॥ करपल्लवसंगीनि तैरस्मान्रक्षसर्वतः॥४४॥
ऋषिरुवाच॥४५॥ एवं स्तुता सुरैर्दिव्यैः कुसुमैर्नंदनो
द्भवैः॥ अर्चिता जगतां धात्री तथा गंधानुलेपनैः॥४६॥
भक्त्या समस्तैस्त्रिदशैर्दिव्यैर्धूपैः सुधूपिता॥ प्राह प्र
साद सुमुखी समस्तान्प्रणतान्सुरान्॥४७॥ देव्यु
वाच॥४७॥ व्रियतां त्रिदशाः सर्वे यदस्मत्तोभिवांछि ॥२२॥
तं॥४९॥ देवा ऊचुः॥५०॥ भगवत्या कृतं सर्वं नाकिंचिद

वशिष्यतो पदयं निहतः शत्रुरस्माकं महिषासुरः ५१ ॥
यदि चापि वरो देयस्त्वयास्माकं महेश्वरी। संस्मृता संस्मृ
ता त्वं नो हिंसेथाः परमापदः ५२ यश्च मर्त्यः स्तवैरेभि
स्त्वां स्तोष्यत्यमलानने। तस्य वित्तर्द्धिविभवैर्धनदा
रादिसंपदां ५३ वृद्धये स्मत्प्रसन्ना त्वं भवेथाः सर्व
दांबिके ५४ ऋषिरुवाच ॥ ५५ इति प्रसादिता देवैर्ज
गतोर्थे तथात्मनः। तथेत्युक्त्वा भद्रकाली बभूवांतर्हि
ता नृप ५६ इत्येतत्कथितं भूप संभूता सा यथा पुरा दे

वीदेवशारीरेभ्योऽज्ञगन्नयहितैषिणी॥५७॥पुनश्च गौरीदेहा
सासमुद्भूता यथाभवत्॥ वधाय दुष्टदैत्यानां तथा शुंभनि
शुंभयोः॥५८॥रक्षणाय च लोकानां देवानामुपकारि
णी तच्छृणुष्व मयाख्यातं यथावत्कथयामि ते॥५९॥ इ
ति श्रीमार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमहात्म्ये
महिषासुरवधः समाप्तः ४ ऋषिरुवाच॥ पुरा शुं
भनिशुंभाभ्यामसुराभ्यां शचीपतेः॥त्रैलोक्यं यज्ञभा
गाश्च हृता मदबलाश्रयात्॥१॥ तावेव सूर्यतां तद्वद् ॥२३॥
धिकारं तथैंदवं॥ कौबेरमथ याम्यं च चक्राते वरुण

स्यच ॥३२॥ तावेवपवनर्धिंचचक्रतुर्वन्हिकर्मच ॥ ततोदे
वाविनिर्धूताभ्रष्टराज्याः पराजिताः ॥३३॥ हृताधिका
रास्त्रिदशास्ताभ्यां सर्वेनिराकृताः ॥ महासुराभ्यां तां
देवीं संस्मरंत्य पराजितां ॥३४॥ तयास्माकंवरोदत्तोय
थापत्सुस्मृताखिलाः ॥ भवतांनाशयिष्यामितत्क्षणा
त्परमापदः ॥३५॥ इतिकृत्वामतिंदेवाहिमवंतंनगेश्वरं ॥
जग्मुस्तत्रततोदेवींविष्णुमायांप्रतुष्टुवुः ॥३६॥ देवा
ऊचुः ॥३७॥ नमोदेव्यैमहादेव्यैशिवायैसततंनमः ॥ नमः

प्रकृत्यै भद्रायै नियताः प्रणताः स्मतां ॥८॥ रौद्रायै नमो
नित्यायै गौर्यै धात्र्यै नमो नमः ॥ ज्योत्स्नायै चेंदुरूपि
ण्यै सुखायै सततं नमः ॥९॥ कल्याण्यै प्रणतां वृद्ध्यै सि
द्ध्यै कुर्मो नमो नमः ॥ नैर्ऋत्यै भूभृतां लक्ष्म्यै शर्वाण्यै
ते नमो नमः ॥१०॥ दुर्गायै दुर्गपारायै सारायै सर्वका
रिण्यै ॥ ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ॥११॥
अतिसौम्यातिरौद्रायै नतास्तस्यै नमो नमः ॥ नमो ज
गत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ॥१२॥ या देवी सर्वभू

तेषु विष्णुमायेतिशब्दिता॥ नमस्तस्यै३नमोनमः॥ ७४॥

[illegible]

[illegible] ७५॥ यादेवी सर्वभूतेषु चेतनेत्यभिधीयते॥

नमस्तस्यै३नमोनमः॥ ७८॥ यादे॰ बुद्धि॰॥ ८१॥ यादे॰

निद्रा॰॥ ८४॥ यादे॰ क्षुधा॰॥ ८७॥ यादे॰ छाया॰॥ ९०॥ यादे॰

शक्ति॰॥ ९३॥ यादे॰ तृष्णा॰॥ ९६॥ यादे॰ शांति॰॥ ९९॥ या

दे॰ जाति॰॥ १०२॥ यादे॰ लज्जा॰॥ १०५॥ यादे॰ शांति॰॥ १०८॥ यादे॰

श्रद्धा॰॥ १११॥ यादे॰ कांति॰॥ ११४॥ यादे॰ लक्ष्मी॰॥ ११७॥ यादे॰

॥२५॥

वृत्ति० ॥२०॥ या दे० स्मृति० ॥२३॥ या दे० दया० ॥२६॥ या दे० तु
ष्टि० ॥२९॥ या दे० मातृ० ॥३२॥ या दे० भ्रांति० ॥३५॥ इंद्रिया
णामधिष्ठात्री भूतानां चाखिलेषु या भूतेषु सततं
तस्यै व्याप्ति देव्यै नमो नमः ॥३६॥ चितिरूपेण या कृ
त्स्नमेतद्व्याप्य स्थिता जगत् ॥ नमस्तस्यै नमो नमः
॥३९॥ स्तुता सुरैः पूर्वमभीष्टसंश्रयात्तथा सुरेंद्रेण
षु दिने सवि[illegible]ता ॥ करोतु सा नः शुभहेतुरीश्वरी शुभा ॥२५॥
नि भद्राण्यभिहंतु चापदः ॥४०॥ या सांप्रतं चोद्धत

दैत्यतापितैरस्माभिरीशाच सुरैर्नमस्यते॥ याच
स्मृता तत्क्षणमेव हंति नः सर्वापदो भक्तिविनम्र
मूर्तिभिः॥८२॥ ऋषिरुवाच॥८३॥ एवं स्तवादियुक्ता
नां देवानां तत्र पार्वती॥ स्नातुमभ्याययौ तोये जा
न्हव्या न्रपनंदन॥८३॥ साब्रवीत्तान्सुरान्सु भ्रूर्भ सु
वद्भिः स्तूयतेत्र का॥ शरीरकोशतश्चास्याः समुद्भू
ताब्रवीच्छिवा॥८४॥ स्तोत्रं ममैतत्क्रियते शुंभदैत्य
निराकृतैः॥ देवैः समेतैर्निशुंभेन पराजितैः॥८५॥

नैःसम

॥२६॥

शरीरकोशाद्यतस्याः पार्वत्यानिःसृतांबिका॥ कौ
शिकीति समस्तेषु ततो लोकेषु गीयते ८६ तस्यां
विनिर्गतायां तु कृष्णाभूत्सापि पार्वती॥ कालिकेति
समाख्याता हिमाचलकृताश्रया॥ ८७ ततोंबिकां
परं रूपं बिभ्राणां सुमनोहरं ददर्श चंडो मुंडश्च भृ
त्यौ शुंभनिशुंभयोः॥ ८८ ताभ्यां शुंभाय चाख्याता
अतीव सुमनोहरा। काप्यास्ते स्त्री महाराजभास ॥२६॥
यंती हिमाचलं ८९ नैव तादृक् क्वचिद्रूपं दृष्टं के

नचिदुत्तमं॥ ज्ञायतांकाप्यसौदेवी गृह्यतांचासुरेश्वर॥९०॥
स्त्रीरत्नमतिचार्वंगीद्योतयंतीदिशस्त्विषा॥ सातुतिष्ठतिदैत्यें
द्र तांभवान्द्रष्टुमर्हति॥९१॥ यानिरत्नानिमणयोगजाश्वा
दीनिवैप्रभो॥ त्रैलोक्येतुसमस्तानिसांप्रतंभांतितेगृहे॥९२॥
ऐरावतःसमानीतोगजरत्नंपुरंदरात्॥ पारिजाततरु
श्चायंतथैवोच्चैःश्रवाहयः॥९३॥ विमानंहंससंयुक्तमेत
त्तिष्ठतितेंगणे॥ रत्नभूतमिहानीतंयदासीद्वेधसोद्भुतं॥९४॥
निधिरेषमहापद्मःसमानीतोधनेश्वरात्॥ किंजल्किनीं
ददौचाब्धिःमालामम्लानपंकजां॥९५॥ छत्रंतेवारुणंगे

॥२७॥

हे कांचनस्रावि तिष्ठति। तथायंस्पंदनवरो यः पुरासीत्प्रजा
पतेः।५६। मृत्योरुत्क्रांतिदा नाम शक्तिरीश त्वया हृता। पा
शः सलिलराजस्य भ्रातुस्तव परिग्रहे।५७। निशुंभस्या
ब्धिजाताश्च समस्ता रत्नजातयः। वन्हिरपि ददौ तुभ्यम
ग्निशौचे च वाससी।५८। एवं दैत्येंद्र रत्नानि समस्तान्याहृ
तानि ते। स्त्रीरत्नमेषा कल्याणी त्वया कस्मान्न गृह्यते।५९।
ऋषिरुवाच।६०। निशम्येति वचः शुंभः स तदा चंडमुंड
योः। प्रेषयामास सुग्रीवं दूतं देव्या महासुरं।६१। इति ॥२७॥
चेति च वक्तव्या सा गत्वा वचनान्मम। यथा चाभ्येति

संप्रीत्या तथा कार्यं त्वया लघु ॥६२॥ स तत्र गत्वा यत्रास्ते शै
लोद्देशेतिशोभने सा देवी तां ततः प्राह श्लक्ष्णं मधुरया
गिरा ॥६३॥ दूत उवाच ॥६४॥ दिविदैत्येश्वरः शुंभस्त्रैलोक्ये
परमेश्वरः ॥ दूतोहं प्रेषितस्तेन त्वत्सकाशमिहागतः ॥
६५ अव्याहताज्ञः सर्वासु यः सदा देवयोनिषु ॥ निर्जि
ताखिलदैत्यारिः स यदाह शृणुष्व तत ॥६६॥ मम त्रैलो
क्यमखिलं मम देवा वशानुगाः ॥ यज्ञभागानहं स
र्वानुपाश्नामि पृथक् पृथक् ॥६७॥ त्रैलोक्ये वररत्नानि

ममवश्यान्यशेषतः॥ तथैवगजरत्नानिहृत्वादेवेंद्रवाहनं॥
६८॥ क्षीरोदमथनोद्भूतमश्वरत्नंममामरैः। उच्चैःश्रवसस-
ंज्ञंतत्प्रणिपत्यसमर्पितं॥६९॥ यानिचान्यानिदेवेषुगंधर्वे-
षूरगे[illegible]षुचरत्नभूतानिभूतानितानि
मय्येवशोभने॥७०॥ स्त्रीरत्नभूतांत्वांदेविलोकेमन्याम-
हेवयं॥ सात्वमस्मानुपागच्छयतोरत्नभुजोवयं॥७१॥ मां
वाममानुजंवापिनिशुंभमुरुविक्रमं।भजत्वंचंचला-
पांगिरत्नभूतासिवैयतः॥७२॥ परमैश्वर्यमतुलंप्राप्स्य ॥२५॥
सेमत्परिग्रहात्। एतद्बुद्ध्यासमालोच्यमत्परिग्रहतां

व्रज॥७३॥ ऋषिरुवाच॥७४॥ इत्युक्ता सा तदा देवी गंभीरांतः
स्मिता जगौ॥ दुर्गा भगवती भद्रा ययेदं धार्यते जगत्॥७५॥
देव्युवाच॥७६॥ सत्यमुक्तं त्वया नात्र मिथ्या किंचि
त्वयोदितं॥ त्रैलोक्याधिपतिः शुंभो निशुंभश्चापि ता
दृशः॥७७॥ किं त्वत्र यत्प्रतिज्ञातं मिथ्या तत्क्रियते कथं॥ श्रू
यतामल्पबुद्धित्वात्प्रतिज्ञा या कृता पुरा॥७८॥ यो मां जय
ति संग्रामे यो मे दर्पं व्यपोहति॥ यो मे प्रतिबलो लोके
स मे भर्त्ता भविष्यति॥७९॥ तदागच्छतु शुंभोत्र निशुंभो
वा महासुरः॥ मां जित्वा किं चिरेणात्र पाणिं गृह्णातु मे

॥२९॥

युधु॥७०॥ दूतउवाच॥७१॥ अवलिप्तासिमैवंत्वंदेविब्रूहिम
माग्रतः॥त्रैलोक्येकःपुमांस्तिष्ठेदग्रेशुंभनिशुंभयोः॥७२॥
अन्येषामपिदैत्यानांसर्वेदेवानवैयुधि॥तिष्ठंतिसंमुखेदेवि
किंपुनःस्त्रीत्वमेकिका॥७३॥इंद्राद्याःसकलादेवास्तस्थु
र्येषांनसंयुगे॥शुंभादीनांकथंतेषांस्त्रीप्रयास्यसिसंमुखं
॥७४॥सात्वंगछमयैवोक्तापार्श्वंशुंभनिशुंभयोः॥केशाक
र्षणनिर्धूतगौरवामागमिष्यसि॥७५॥देव्युवाच॥७६॥
एवमेतद्बलीशुंभोनिशुंभश्चातिवीर्यवान्॥किंकरो ॥२९॥
मिप्रतिज्ञामेयदनालोचितापुरा॥७७॥सत्वंगछमयोक्तं

तेपदेतस्सर्वमाहतः तदाचक्ष्वासुरेंद्रायसचयुक्तंकरोतुयत् ॥
॥ ८८ ॥ इतिमार्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवीमहात्म्ये ५
ऋषिरुवाच ॥ ८९ ॥ इत्याकर्ण्यवचोदेव्याः सदूतोमर्षपूरितः
समाचष्टसमागम्यदैत्यराजायविस्तरात् ॥ १० ॥ तस्यदूतस्यत
द्वाक्यमाकर्ण्यासुरराट् ततः सक्रोधः प्राह दैत्यानामाधि
पं धूम्रलोचनं ॥ ११ ॥ हे धूम्रलोचनाशुत्वं स्वसैन्यपरिवारि
तः तामानयबलाद्दुष्टांकेशाकर्षणविह्वलां ॥ १२ ॥ तत्परि
त्राणदः कश्चिद्यदिवोत्तिष्ठतेपरः सहंतव्योमरोवापि
यक्षोगंधर्वएववा ॥ १३ ॥ ऋषिरुवाच ॥ १४ ॥ तेनाज्ञप्तः स

तः शीघ्रं स दैत्यो धूम्रलोचनः ॥ वृतः षष्ठ्या सहस्राणाम
सुराणां द्रुतं ययौ ॥ ५ ॥ स दृष्ट्वा तां ततो देवीं तुहिनाचल
संस्थितां ॥ जगादोच्चैः प्रयाहीति मूलं शुंभनिशुंभयोः ॥ ६ ॥
न चेत्प्रीत्याद्य भवती मद्भर्तारमुपैष्यति ॥ ततो बलान्नया
म्येष केशाकर्षणविह्वलां ॥ ७ ॥ देव्युवाच ॥ ८ ॥ दैत्येश्वरे
ण प्रहितो बलवान्बलसंवृतः ॥ बलान्नयसि मामेवं ततः
किं ते करोम्यहं ॥ ९ ॥ ऋषिरुवाच ॥ १० ॥ इत्युक्तः सोभ्य
धावत्तामसुरो धूम्रलोचनः ॥ हुंकारेणैव तं भस्म सा चका
रांबिका ततः ॥ ११ ॥ अथ क्रुद्धं महासैन्यमसुराणां तथांबि

कों॥ ववर्ष सायकैस्तीक्ष्णैस्तथा शक्तिपरश्वधैः॥२॥ ततो
धुतसटः कोपात्कृत्वा नादं सुभैरवं॥ पपातासुरसेनायां
सिंहो देव्याः स्ववाहनः॥३॥ कांश्चित्करप्रहारेण दैत्याना
स्येन चापरान्॥ आक्रांत्या चाधरेणान्यान्जघान स
महासुरान्॥४॥ केषांचित्पाटयामास नखैः कोष्ठानि के
सरी॥ तथा तलप्रहारेण शिरांसि कृतवान्पृथक्॥५॥ विछि
न्नबाहुशिरसः कृतास्तेन तथापरे॥ पपौ च रुधिरं को
ष्ठादन्येषां धुतकेसरः॥६॥ क्षणेन तद्बलं सर्वं क्षयं नीतं
महात्मना॥ तेन केसरिणा देव्या वाहनेनातिकोपिना॥७॥

॥३१॥

श्रुत्वा तमसुरं देव्या निहतं धूम्रलोचनं॥ बलंच क्षयितं कृ
त्स्नं देवीकेसरिणा ततः॥८॥ चुकोप दैत्याधिपतिः शुंभः
प्रस्फुरिताधरः॥ आज्ञापयामास च तौ चंडमुंडौ महा
सुरौ॥९॥ हे चंड हे मुंड बलैर्बहुलैः परिवारितौ॥ तत्र गछ
त गत्वा च सा समानीयतां लघु॥१०॥ केशेष्वाकृष्य बध्वा
वा यदि वः संशयो युधि॥ तदाशेषायुधैः सर्वैरसुरैर्विनि
हन्यतां॥११॥ तस्यां हतायां दुष्टायां सिंहे च विनिपातिते॥
शीघ्रमागम्यतां बध्वा गृहीत्वा तामथांबिकां॥१२॥ इति
मार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमहात्म्ये शुंभ ॥३१॥

निशुंभसेनानीधूम्रलोचनवधः ६ ऋषिरुवाच १३

आज्ञप्तास्ते ततो दैत्याश्चंडमुंडपुरोगमाः चतुरंगब
लोपेता ययुरभ्युद्यतायुधाः १४ ददृशुस्ते ततो देवी
मीषद्धासां व्यवस्थितां सिंहस्योपरि शैलेंद्रशृंगे महति
कांचने १५ ते दृष्ट्वा तां समादातुमुद्यमं चक्रुरुद्यताः
आकृष्टचापासिधरास्तथान्ये तत्समीपगाः १६ ततः
कोपं चकारोच्चैरंबिका तानरींप्रति कोपेन चास्या वद
नं मसीवर्णमभूत्तदा १७ भ्रुकुटीकुटिलात्तस्या ल ला
टफलकाद्द्रुतं काली करालवदना विनिष्क्रांतासिपाशि

नी॥१८॥विचित्रखट्वांगधरा नरमालाविभूषणा॥ द्वीपि
चर्मपरीधाना शुष्कमांसातिभैरवा॥१९॥अतिविस्तारव
दना जिह्वाललनभीषणा॥ निमग्नारक्तनयना नाद
पूरितदिङ्मुखा॥२०॥सावेगेनाभिपतिता घातयंती
महासुरान्॥ सैन्ये तत्र सुरारीणामभक्षयत तद्बलं॥२१॥
पार्ष्णिग्राहांकुशग्राहीयोधघंटासमन्वितान्॥समादा
यैकहस्तेन मुखे चिक्षेप वारणान्॥२२॥तथैव योधं तुर
गै रथं सारथिना सह॥ निक्षिप्य वक्त्रे दशनैश्चर्वयंत्य
तिभैरवं॥२३॥एकं जग्राह केशेषु ग्रीवायामथ चापरं॥

॥३२॥

पादेनाच्चैवाक्रम्यैन्यमुरसान्यमपोथयत् ॥२४॥ तैर्मु
क्तानि च शस्त्राणि महास्त्राणि तथासुरैः ॥ मुखेन जग्र
ग्राह रुषा दशनैर्मथितान्यपि ॥२५॥ बलिनां तद्बलं स
र्वमसुराणां महात्मनां ॥ ममर्दाभक्षयच्चान्यानन्यां
श्चाताडयत्तथा ॥२६॥ असिना निहताः केचित्केचि
त्खट्वांगताडिताः ॥ जग्मुर्विनाशमसुरा दंताग्राभि
हतास्तथा ॥२७॥ क्षणेन तद्बलं सर्वमसुराणां निपा
तितं ॥ दृष्ट्वा चंडोभिदुद्राव तां कालीमतिभीषणां ॥२८॥
शरवर्षैर्महाभीमैर्भीमाक्षीं तां महासुरः ॥ छादया

मासच्चक्रैश्च मुंडःक्षिप्तैसहस्त्रशः॥२९॥ तानिचक्रा
ण्यनेकानि विशमानानितन्मुखं॥ बभुर्यथार्कबिंबा
निसुबहूनिघनोदरं॥३०॥ ततोजहासातिरुषाभी
मंभैरवनादिनी॥ कालिकरालवक्रांतर्दुर्दर्शदश
नोज्वला॥३१॥ उत्थायचमहासिंहंदेवीचंडमधा
वत॥ गृहीत्वाचास्यकेशेषुशिरस्तेनासिनाछिनत्॥३२॥
अथमुंडोभ्यधावत्तांदृष्ट्वाचंडंनिपातितं॥ तमप्य
पातयद्भूमौसाखड्गाभिहतंरुषा॥३३॥ हतशेषंततः ॥३३॥
सैन्यंदृष्ट्वाचंडंनिपातितं॥ मुंडंचसुमहावीर्यंदिशो

भेजे मयातुरा ॥ २४ ॥ शिरश्चंडश्च कालीच गृहीत्वा
मुंडमेव च ॥ प्राह प्रचंडाट्टहासमिश्रमभ्येत्य चंडिकां ॥ २५ ॥
मया तवात्रोपहृतौ चंडमुंडौ महापशू ॥ युद्धयज्ञे स्वयं
शुंभं निशुंभं च हनिष्यसि ॥ २६ ॥ ऋषिरुवाच ॥ २७ ॥ ता
वानीतौ ततो दृष्ट्वा चंडमुंडौ महासुरौ ॥ उवाच कालीं
कल्याणी ललितं चंडिका वचः ॥ २८ ॥ यस्माच्चंडं च मुं
डं च गृहीत्वा त्वमुपागता ॥ चामुंडेति ततो लोके ख्या
ता देवि भविष्यसि ॥ २९ ॥ इति श्रीमार्कंडेयपुराणे सा
वर्णिके मन्वंतरे देवीमहात्म्ये चंडमुंडवध ७ ऋषि

॥३४॥

रुवाच ॥ ४० ॥ चंडे च निहते दैत्ये मुंडे च विनिपातिते ॥ बहु
लेषु च सैन्येषु क्षयितेष्वसुरेश्वरः ॥ ४१ ॥ ततः कोपप
राधीनचेताः शुंभः प्रतापवान् ॥ उद्योगं सर्वसैन्यानां
दैत्यानामादिदेश ह ॥ ४२ ॥ अद्य सर्वबलैर्दैत्याः षड
शीतिरुदायुधाः ॥ कंबूनां चतुरशीतिर्निर्यांतु स्वबलै
र्वृताः ॥ ४३ ॥ कोटिवीर्याणि पंचाशदसुराणां कुलानि
वै ॥ शतं कुलानि धौम्राणां निर्गच्छंतु ममाज्ञया ॥ ४४
कालका दौर्हृदा मौर्याः कालिकेयास्तथासुराः ॥ युद्धाय ॥३४॥
सज्जा निर्यांतु आज्ञया त्वरिता मम ॥ ४५ ॥ इत्याज्ञाप्य

स्करपतिः शुंभो भैरवशासनः। निर्जगाम महासैन्यसहस्रै
र्बहुभिर्वृतः॥४६॥ आयांतं चंडिका दृष्ट्वा तत्सैन्यमतिभी
षणं। ज्यास्वनैः पूरयामास धरणीगगनांतरं॥४७॥ ततः
सिंहो महानादमतीव कृतवान्नृप। घंटास्वनेन तान्नादा
नंबिका चोपबृंहयत॥४८॥ धनुर्ज्यासिंहघंटानां नादापू
रितदिङ्मुखा। निनादैर्भीषणैः काली जिग्ये विस्ता
रितानना॥४९॥ तन्निनादमुपश्रुत्य दैत्यसैन्यैश्चतुर्दि
शं। देवी सिंहस्तथा काली सरोषैः परिवारिताः॥५०॥ ए
तस्मिन्नंतरे भूप विनाशाय सुरद्विषां। भवायामरसिं

हानामतिवीर्यबलान्विता॥५१॥ब्रह्मेशगुहविष्णूनां त
थेंद्रस्य च शक्तयः॥शरीरेभ्यो विनिष्क्रम्य तद्रूपैश्चंडि
कां ययुः॥५२॥यस्य देवस्य यद्रूपं यथाभूषणवाहनं॥त
द्वदेहि तच्छक्तिरसुरान्योद्धुमाययौ॥५३॥हंसयुक्त
विमानाग्रे साक्षसूत्रकमंडलुः॥आयाता ब्रह्मणः श
क्तिर्ब्रह्माणी साभिधीयते॥५४॥माहेश्वरी वृषारू
ढा त्रिशूलवरधारिणी॥महाहिवलया प्राप्ता चंद्ररे
खाविभूषणा॥५५॥कौमारी शक्तिहस्ता च मयूरव ॥३५॥
रवाहना॥योद्धुमभ्याययौ दैत्यानंबिका गुहरूपिणी॥

॥५६॥ तथैव वैष्णवी शक्तिर्गरुडोपरि संस्थिता॥ शंखच
क्रगदाशार्ङ्गखड्गहस्ताभ्युपाययौ॥५७॥ यज्ञवाराह
मतुलं रूपं या बिभ्रतो हरेः॥ शक्तिः साप्याययौ तत्र
वाराहीं बिभ्रती तनुं॥५८॥ नारसिंही नृसिंहस्य बि
भ्रती सदृशं वपुः॥ प्राप्ता तत्र सटाक्षेपक्षिप्तनक्षत्र
संहतिः॥५९॥ वज्रहस्ता तथैवैन्द्री गजराजोपरिस्थिता
॥प्राप्ता सहस्रनयना यथा शक्रस्तथैव सा॥६०॥ ततः
परिवृतः स्ताभिरीशानो देवशक्तिभिः॥ हन्यंतामसु

रा: शीघ्रं मम प्रीत्याह चंडिकां॥६१॥ ततो देवी शरीरात्तु
विनिष्क्रांतातिभीषणा॥ चंडिकाशक्तिरत्युग्रा शिवाशु
तनिनादिनी॥६२॥ सा चाह धूम्रजटिलमीशानमपरा
जिता॥ दूत त्वं गच्छ भगवन्पार्श्वं शुंभनिशुंभयो:॥६३॥
ब्रूहि शुंभं निशुंभं च दानवावतिगर्वितौ॥ ये चान्ये दान
वास्तत्र युद्धाय समुपस्थिता:॥६४॥ त्रैलोक्यमिंद्रो ल
भतां देवा: संतु हविर्भुज:॥ यूयं प्रयात पातालं यदि
जीवितुमिच्छथ॥६५॥ बलावलेपादथ चेद्भवंतो युद्ध
कांक्षिण:॥ तदागच्छत तृप्यंतु मच्छिवा: पिशितेन व:॥६६॥

यतो नियुक्तो दौत्येन तया देव्या शिवः स्वयं ॥ शिवदूती
तिलोकेस्मिंस्ततः सा ख्यातिमागता ॥ २७ ॥ तेपि श्रु
त्वा वचो देव्याः शर्वाख्यातं महासुराः ॥ अमर्षापूरि
ता जग्मुर्यतः कात्यायनी स्थिता ॥ २८ ॥ ततः प्रथम
मेवाग्रे शरशक्त्यृष्टिवृष्टिभिः ॥ ववर्षुरुद्धतामर्षा
स्तां देवीममरारयः ॥ २९ ॥ सा च तान्प्रहितान्बाणाञ्छू
लचक्रपरस्वधान् ॥ चिच्छेद लीलया [illegible] तधनु ध्मा
र्मुक्तैर्महेषुभिः ॥ ३० ॥ तस्याग्रतस्तथा काली शूल
पातविदारितान् ॥ खट्वांगपोथितांश्चारीन कुर्वती

।३७।

व्यचरन्नदा॥७१॥ कमंडलुजलाक्षेपहतवीर्यान्हतौ
जसः॥ ब्रह्माणी चाकरोछत्रून्येनयेनस्मधावति॥७२॥
माहेश्वरीत्रिशूलेन तथाचक्रेणवैष्णवी॥ दैत्यांज
घानकौमारी तथाशक्त्यातिकोपना॥७३॥ ऐंद्री
कुलिशपातेन शतशो दैत्यदानवाः॥ पेतुर्विदा
रिताः पृथ्व्यां रुधिरौघप्रवर्षिणः॥७४॥ तुंडप्रहा
रविध्वस्ता दंष्ट्राग्रक्षतवक्षसः॥ वाराहमूर्त्यान्य
पतंश्चक्रेणचविदारिताः॥७५॥ नखैर्विदारितां ।३७।
श्चान्यान् भक्षयंती महासुरान्॥ नारसिंही चचा

राज्ञौ नादापूर्णदिगंबरा ॥७६॥ चंडाट्टहासैरसक[illegible]राः
शिवदूत्यमिदूषिता॥ पेतुः पृथिव्यां पतितांस्तांश्चखा
दाथ सा तदा ॥७७॥ इति मातृगणं क्रुद्धं मर्दयंतं महा
सुरान् ॥ दृष्ट्वाभ्युपायैर्विविधैर्नेशुर्देवारिसैनिकाः॥७८॥
पलायनपरान्दृष्ट्वा दैत्यान्मातृगणार्दितान् ॥ यो
द्धुमभ्याययौ क्रुद्धो रक्तबीजो महासुरः॥७९॥ ए
क बिंदुर्यदा भूमौ पतत्यस्य शरीरतः॥ समुत्पत
ति मेदिन्यास्तत्प्रमाणस्तदासुरः॥८०॥ युयुधे
स गदापाणिरिंद्रशक्त्या महासुरः॥ ततश्चैंद्री स्व

॥२८॥
वज्रेणारक्तबीजमताडयत्॥८१॥कुलिशेनाहतस्या
शु तस्य सुस्राव शोणितं॥ समुत्तस्थुस्ततो योधास्त
द्रूपास्तत्पराक्रमाः॥८२॥यावंतः पतितास्तस्य शरी
राद्रक्तबिंदवः॥तावंतः पुरुषा जातास्तद्वीर्यबलवि
क्रमाः॥८३॥ते चापि युयुधुस्तत्र पुरुषा रक्तसंभवाः॥
समं मातृभिरत्युग्रशस्त्रपातातिभीषणं॥८४॥पुन
श्च वज्रपातेन क्षतमस्य शिरो यदा॥ववाह रक्तं पुरु
षास्ततो जाताः सहस्रशः॥८५॥वैष्णवी समरे चैनं
चक्रेणाभिजघान ह॥गदया ताडयामास ऐंद्री त ॥२८॥

मसुरेश्वरं ॥८६॥ वैष्णवीचक्रभिन्नस्यरुधिरस्रावसं
भवैः ॥ सहस्रशो जगद्व्याप्तं तत्प्रमाणैर्महासुरैः ॥८७॥
शक्त्या जघान कौमारी वाराही च तथासिना ॥ माहे
श्वरी त्रिशूलेन रक्तबीजं महासुरं ॥८८॥ स चापि
गदया दैत्यः ॥ सर्वा एवाहनत्पृथक् ॥ मातॄः कोप
समाविष्टो रक्तबीजो महासुरः ॥८९॥ तस्याहतस्य
बहुधा शक्तिशूलादिभिर्भुवि ॥ पपात यो वै रक्तौघ
स्तेनासञ्छतशोसुराः ॥९०॥ तैश्चासुरासृक्

॥३९॥

संभृतैरसुरैः सकलं जगत्॥ व्याप्तमासीत्ततो दे
वाभयमाजग्मुरुत्तमं॥१९॥ तान्विषण्णान्सुरान्
दृष्ट्वा चंडिका प्राहसत्त्वरा॥ उवाच कालीं चामुंडे
विस्तरं वदनं कुरु॥२०॥ मच्छस्त्रपातसंभृतान्
रक्तबिंदून्महासुरान्॥ रक्तबिंदोः प्रतीछ त्वं वक्त्रे
णानेन वेगिता॥२१॥ भक्षयंती चर रणे तदुत्प
न्नान्महासुरान्॥ एवमेष क्षयं दैत्यः क्षिणर ।६९।
क्तो गमिष्यति॥२२॥ भक्ष्यमाणा[illegible]या चोग्रा न

स्व

चोत्पत्स्यंति चापरोइत्युक्त्वा तां ततो देवी शूलेना
भिजघान तं मुखेन काली जगृहे रक्तबीजस्य
शोणितं ॥५६॥ ततो सावाजघानाथ गदया
तत्र चंडिकां न चास्या वेदनां चक्रे गदापाता
ल्पिकामपि ॥५७॥ तस्याहतस्य देहात्तु बहुसु
स्राव शोणितं यतः स्ततः स्तद्वक्त्रेण चामुंडा
संप्रतीछति ॥५८॥ मुखे समुद्गता येस्या रक्तपा
तान्महासुराः ॥ तांश्चखादाथ चामुंडा पपौ

तस्यच शोणितं॥५९॥ देवी शूलेन वज्रेण बाणै
॥८०॥ रसिभिर्ऋष्टिभिः॥ जघान रक्तबीजं तं चामुंडा
पीतशोणितं॥६०॥ स पपात महीपृष्ठे शस्त्रसं
घसमाहतः॥ नीरक्तश्च महीपाल रक्तबीजो
महासुरः॥६१॥ ततस्ते हर्षमतुलमवापुस्त्रिद
शा नृप॥ तेषां मातृगणो जातो ननर्तासृङ्मदो
द्धतः॥६२॥ इति मार्कंडेयपुराणे देवीमहात्म्ये ॥८०॥
रक्तबीजवधः॥ राजोवाच॥८॥ ८॥

विचित्रमिदमारव्यातंभगवन्भवताममा॥ देव्याश्चरित
माहात्म्यंरक्तबीजवधाश्रितं॥४॥ भूयश्चेच्छाम्यहंश्रोतुं
रक्तबीजेनिपातिते॥ चकारशुंभोयत्कर्मनिशुंभश्चा
तिकोपनः॥५॥ ऋषिरुवाच ६॥ चकारकोपमतुलंरक्त
बीजेनिपातिते॥ शुंभासुरोनिशुंभश्चहतेष्वन्येषुचाह
वे॥७॥ हन्यमानंमहासैन्यंविलोक्यामर्षमुद्वहन्॥ अ
भ्यधावन्निशुंभोथमुख्ययासुरसेनया॥८॥ तस्याग्रतस्त
थापृष्ठेपार्श्वयोश्चमहासुराः॥ संदष्टौष्ठपुटाःक्रुद्धा
हंतुंदेवीमुपाययुः॥९॥ आजगाममहावीर्यःशुंभोपि
स्वबलैर्वृतः॥ निहंतुंचंडिकांकोपात्कृत्वायुद्धंतुमातृभिः१०॥

ततोयुद्धमतीवासीद्देव्याःशुंभनिशुंभयोः॥ शरवर्षम
तीवोग्रंमेघयोरिववर्षतोः॥११॥ चिच्छेदास्ताञ्छरांस्ताभ्यां
चंडिकास्वशरोत्करैः॥ ताडयामासचांगेषुशस्त्रौघैरसुरे
श्वरौ॥१२॥ निशुंभोनिशितंखड्गंचर्मचादायसुप्रभं॥
आताडयन्मूर्ध्निसिंहंदेव्यावाहनमुत्तमं॥१३॥ ताडिते
वाहनेदेवीक्षुरप्रेणासिमुत्तमं॥ निशुंभस्याशुचिच्छेदच
र्मचाप्यष्टचंद्रकं॥१४॥ छिन्नेचर्मणिखड्गेचशक्तिंनिक्षेप
सोसुरः॥ तामप्यस्यद्विधाचक्रेचक्रेणाभिमुखागतां॥१५॥
कोपाध्मातोनिशुंभोथशूलंजग्राहदानवः॥ आयातंमुष्टि ॥५१॥
पातेनदेवीतच्चाप्यचूर्णयत्॥१६॥ आविध्याथगदांसो

पिबेति क्षिप चंडिकां प्रति ॥ सापि देव्यास्त्रिशूलेन भिन्ना
भस्मत्वमागता ॥१७॥ ततः परशुहस्तं तमायांतं दैत्यपुं
गवं ॥ आहत्य देवी बाणौघैरपातयत भूतले ॥१८॥ तस्मि
न्निपतिते भूमौ निशुंभे भीमविक्रमे ॥ भ्रातर्यतीव संक्रुद्धः
प्रययौ हंतुमंबिकां ॥१९॥ स रथस्थस्तथात्युच्चैर्गृहीत
परमायुधैः ॥ भुजैरष्टाभिरतुलैर्व्याप्याशेषं बभौ नभः
॥२०॥ तमायांतं समालोक्य देवी शंखमवादयत् ॥ ज्याश
ब्दं चापि धनुषश्चकारातीव दुःसहं ॥२१॥ पूरयामास क
कुभो निजघंटास्वनेन च ॥ समस्तदैत्यसैन्यानां तेजोव
धविधायिना ॥२२॥ ततः सिंहो महादैस्त्याजितेभमहा
नो

मदे॥ पूरयामास गगनं गां तथैव दिशो दश॥२३॥ ततः काली समु
॥५२॥ त्पत्य गगनं क्ष्मामताडयत्। कराभ्यां तन्निनादेन प्राक्स्वनास्ते तिरो
हिताः॥२४॥ अट्टाट्टहासमशिवं शिवदूती चकार ह। तैः शब्दैरसु
रास्त्रेसुः शुंभः कोपं परं ययौ॥२५॥ दुरात्मंस्तिष्ठ तिष्ठेति व्याजहा
राम्बिका यदा। तदा जयेत्यभिहितं देवैराकाशसंस्थितैः॥२६॥
शुंभेनागत्य या शक्तिर्मुक्ता ज्वालातिभीषणा॥ आयांती व
ह्निकूटाभा सा निरस्ता महोल्कया॥२७॥ सिंहनादेन शुंभस्य ॥४२॥
व्याप्तं लोकत्रयांतरं॥ निर्घातनिस्वनो घोरो जितवानवनी
पते॥२८॥ शुंभमुक्ताञ्छरान्देवी शुंभस्तत्प्रहिताञ्छरान्॥ चि पान
च्छेद स्वशरैरुग्रैः शतशोऽथ सहस्रशः॥२९॥ ततः सा चंडिका

ततः सा चंडिका क्रुद्धा शूलेनाभिजघान तं ॥ संदाभिहतो ग
भूमौ मूर्छितो निपपात ह ॥३०॥ ततो निशुंभः संप्राप्य चे
तनामात्तकार्मुकः ॥ आजघान शरैर्देवीं कालिं केसरिणं
तथा ॥ ३१ ॥ पुनश्च कृत्वा बाहूनामयुतं दनुजेश्वरः ॥
चक्रायुधेन दितिजश्छादयामास चंडिकां ॥ ३२ ॥ ततो भ
गवती क्रुद्धा दुर्गा दुर्गार्तिनाशिनी ॥ चिच्छेद तानि चक्रा
णि स्वशरैः सायकांश्च तान् ॥ ३३ ॥ ततो निशुंभो वेगेन
गदामादाय चंडिकां ॥ अभ्यधावत वै हंतुं दैत्यसेनास
मावृतः ॥ ३४ ॥ तस्यापतत एवाशु गदां चिच्छेद चंडि
कां ॥ खड्गेन शितधारेण स च शूलं समाददे ॥ ३५ ॥ शू

लहस्तं समायांतं निशुंभममरार्दनं॥ हृदि विव्याध शूले
॥४३॥ नवेगाविद्धेन चंडिका॥३६॥ भिन्नस्य तस्य शूलेन हृद
यान्निःसृतोपरः॥ महाबलो महावीर्यस्तिष्ठेति पुरुषो वद
न्॥३७॥ तस्य निष्क्रामतो देवी प्रहस्य स्वनवत्ततः॥ शिरश्चि
छेद खड्गेन ततोसावपतद्भुवि॥३८॥ ततः सिंहश्च खादोग्र
दंष्ट्राक्षुण्णशिरोधरान्॥ असुरांस्तांस्तथा काली शिवदू
ती तथापरान्॥३९॥ कौमारीशक्तिनिर्भिन्नाः केचिन्ने
शुर्महासुराः॥ ब्रह्माणीमंत्रपूतेन तोयेनान्ये निराकृताः
॥४०॥ माहेश्वरी त्रिशूलेन भिन्नाः पेतुस्तथा परे॥ वा ॥४३॥
राहीतुंडघातेन केचिच्चूर्णीकृता भुवि॥४१॥ खड्ग

खंडं च चक्रेण विप्र व्यादानवाः कृताः॥ वज्रेण गैवं दूष्टी हस्त
यविमुक्तेन तथापरे॥४२॥ किंचिद्विनेशुरसुराः केचिन्नष्टा
महाहवात्॥ भक्षिताश्चापरे काली शिवदूती मृगाधिपैः॥

४३॥ इति मार्कंडेय पुराणे सावर्णिके मन्वंतरे देवीमहात्मे
निशुंभवधः ऋषिरुवाच॥४४॥ निशुंभं निहतं दृष्ट्वा भ्रा
तरं प्राणसंमितं॥ हन्यमानं बलं चैव शुंभः क्रुद्धोब्रवीद्वचः॥
॥४५॥ बलावलेपदुष्टे त्वं मा वह॥ अन्यासां बलमाश्रित्य यु
ध्यसे यातिमानिनी॥४६॥ देव्युवाच॥४७॥ एकैवाहं ज
गत्यत्र द्वितीया का ममापरा॥ पश्यैता दुष्ट मय्येव विशं
त्यो मद्विभूतयः॥४८॥ ततः समस्तास्ता देव्यो ब्रह्माणी प्रमु

मादुर्गेगर्वं ।०४

।।४४।। खालयं ।। तस्या देव्यास्ततो जग्मुरेकैवासीत्तदांबिका
।।४९ देव्युवाच ।।५० अहं विभूत्या बहुभिरिह रूपैर्य
दास्थिता ।। तत्संहृतं मयैकैव तिष्ठाम्याजौ स्थिरो भव ।।५१।।
ऋषिरुवाच ।।५२।। ततः प्रववृते युद्धं देव्याः शुंभस्य चोभयोः ।।
पश्यतां सर्वदेवानामसुराणां च दारुणं ।।५३।। शरवर्षैः शि
तैः शस्त्रैः तथास्त्रैश्चैव दारुणैः ।। तयोर्युद्धमभूद्भूयः सर्वलो
क भयंकरं ।।५४।। दिव्यान्यस्त्राणि शतशो मुमुचे यान्यथां
बिका ।। बभंज तानि दैत्येंद्रस्तत्प्रतीघातकर्तृभिः ।।५५।।
मुक्तानि तेन चास्त्राणि दिव्यानि परमेश्वरी ।। बभंज लीलयै ।।४५।।
वोग्रहुंकारोच्चारणादिभिः ।।५६।। ततः शरशतैर्देवीमाच्छाद

यतसोसुरः॥ सापितत्कुपितादेवी धनुश्चिच्छेद चेषुभिः॥५७॥
छिन्ने धनुषि दैत्येंद्रस्तथाशक्तिमथाददे॥ चिच्छेद देवी चक्रेण
तामप्यस्यकरस्थितां॥५८॥ ततः खड्गमुपादाय शतचंद्रं च भानु
मत्॥ अभ्यधावत्तदा देवीं दैत्यानामधिपेश्वरः॥५९॥ तस्यापत
तएवाशु खड्गं चिच्छेद चंडिका॥ धनुर्मुक्तैः शितैर्बाणैश्चर्म चार्क
करामलं॥६०॥ अश्वांश्चपातयामास रथं सारथिना सह॥ ह
ताश्वः सतदा दैत्यश्छिन्नधन्वा विसारथिः॥६१॥ जग्राह मुद्गरं
घोरमंबिकानिधनोद्यतः॥ चिच्छेदापततस्तस्य मुद्गरं निशितैः
शरैः॥६२॥ तथापि सोभ्यधावत्तां मुष्टिमुद्यम्य वेगवान्॥ समुष्टिं
पातयामास हृदये दैत्यपुंगवः॥६३॥ देव्यास्तं चापि सा देवी

॥४५॥ तलेनोरस्यताडयत्व॥ तलप्रहाराभिहतो निपपात महीतले॥ ६५॥
सदैत्यराजः सहसा पुनरेव तथोत्थितः॥ उत्पत्य च प्रगृह्योच्चै
र्देवीं गगनमास्थितः॥ ६६॥ तत्रापि सा निराधारा युयुधे तेन
चंडिका॥ ६७॥ नियुद्धं खे तदा दैत्यश्चंडिका च परस्परं॥ चक्र
तुः प्रथमं सिद्धमुनिविस्मयकारकं॥ ६७॥ ततो नियुद्धं सुचि
रं कृत्वा तेनांबिका सह॥ उत्पात्य भ्रामयामास चिक्षेप धरणी
तले॥ ६८॥ सक्षिप्तो धरणीं प्राप्य मुष्टिमुद्यम्य वेगितः॥ अभ्य
धावत दुष्टात्मा चंडिकानिधनेच्छया॥ ६९॥ तमायांतं ततो दे
वी सर्वदैत्यजनेश्वरं॥ जगत्यां पातयामास भित्वा शूलेन व ॥४५॥
क्षसि॥ ७०॥ स गतासुः पपातोर्व्यां देवीशूलाग्रविक्षतः॥

चालयन्सकलां पृथ्वीं साब्धिद्वीपां सपर्वतां ॥७१॥ ततः प्रसि
न्नमखिलं हते तस्मिन्दुरात्मनि ॥ जगत्स्वास्थ्यमतीवाप नि
र्मलं चाभवन्नभः ॥७२॥ उत्पातमेघाः सोल्का ये प्रागासंस्ते
शमं ययुः ॥ सरितो मार्गवाहिन्यस्तथासंस्तत्र पातिते ॥७३॥
ततो देवगणाः सर्वे हर्षनिर्भरमानसाः ॥ बभूवुर्निहते तस्मि
न्गंधर्वा ललितं जगुः ॥७४॥ अवादयंस्तथैवान्ये ननृतुश्चा
प्सरोगणाः ॥ ववुः पुण्यास्तथा वाताः सुप्रभोऽभूद्दिवा
करः ॥७५ इति मार्कंडेयपुराणे सावर्णिके मन्वंतरे देवी
माहात्म्ये शुंभवधः १० ऋषिरुवाच ॥७६॥ देव्या हते त
त्र महासुरेंद्रे सेंद्राः सुरा वह्निपुरोगमास्तां ॥ कात्याय

नी) तुष्टुवुरिष्टलंभाद्विकाशिवक्त्राब्जविकाशिताशाः॥७७॥
देवीप्रपन्नार्तिहरे प्रसीद प्रसीद मातर्जगतोखिलस्य॥ प्रसी
द विश्वेश्वरि पाहि विश्वं त्वमीश्वरी देवि चराचरस्य॥७८॥ आ
धारभूता जगतस्त्वमेका महीस्वरूपेण यतः स्थितासि॥ अपां
स्वरूपस्थितया त्वयैतदाप्यायते कृत्स्नमलंघ्यवीर्ये॥७९॥ त्वं
वैष्णवी शक्तिरनंतवीर्या विश्वस्य बीजं परमासि माया॥ संमोहि
तं देवि समस्तमेतत्त्वं वै प्रसन्ना भुवि मुक्तिहेतुः॥८०॥ विद्याः स
मस्तास्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु॥ त्वयैक ॥४६॥
या पूरितमंबयैतत्का ते स्तुतिः स्तव्यपरापरोक्तिः॥८१॥ सर्वभू
ता यदा देवी स्वर्गमुक्तिप्रदायिनी॥ त्वं स्तुता स्तुतये का वा भवंतु

परमोक्तयः॥८२॥ सर्वस्यबुद्धिरूपेणजनस्यहृदिसंस्थिते॥
स्वर्गापवर्गदेदेविनारायणिनमोस्तुते॥८३॥ कलाकाष्ठादि
रूपेणपरिणामप्रदायिनि॥ विश्वस्योपरतौशक्तेना०॥८४॥
सर्वमंगलमंगल्येशिवेसर्वार्थसाधिके॥ शरण्येत्र्यंबकेगौ
रिना०॥८५॥ सृष्टिस्थितिविनाशानांशक्तिभूतेसनातनि॥
गुणाश्रयेगुणमयेना०॥८६॥ शरणागतदीनार्तपरित्राण
परायणे॥ सर्वस्यार्तिहरेदेविना०॥८७॥ हंसयुक्तविमानस्थे
ब्रह्माणीरूपधारिणि॥ कौशांभःक्षरिकेदेविना०॥८८॥ त्रि
शूलचंद्राहिधरेमहावृषभवाहिनि॥ माहेश्वरीस्वरूपे
णना०॥८९॥ मयूरकुक्कुटवृतेमहाशक्तिधरेनघे॥

कौमारीरूपसंस्थाने ना० ॥ १० ॥ शंखचक्रगदाशार्ङ्गगृहीत
परमायुधे । प्रसीद वैष्णवीरूपे ना० ॥ ११ ॥ गृहीतोग्रमहाचक्रे
दंष्ट्रोद्धृतवसुंधरे । वराहरूपिणि शिवे ना० ॥ १२ ॥ नृसिंह
रूपेणोग्रेण हंतुं दैत्यान्कृतोद्यमे । त्रैलोक्यत्राणसहिते ना० ॥
१३ ॥ किरीटिनि महावज्रे सहस्रनयनोज्वले । वृत्रप्राणह
रे चैंद्रि ना० ॥ १४ ॥ शिवदूतीस्वरूपेण हतदैत्यमहाबले ।
घोररूपे महारावे ना० ॥ १५ ॥ दंष्ट्राकरालवदने शिरोमा
लाविभूषणे । चामुंडे मुंडमथने ना० ॥ १६ ॥ लक्ष्मि ल
ज्जे महाविद्ये श्रद्धे पुष्टि स्वधे ध्रुवे । महारात्रि महाविद्ये
ना० ॥ १७ ॥ मेधे सरस्वति वरे भूति बाभ्र वितामसि ॥

नियंते त्वं प्रसीदेशोना०॥ २८॥ सर्वस्वरूपे सर्वेशे सर्वश
क्तिसमन्विते॥ भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमो
स्तुते॥ २९॥ एतत्ते वदनं सौम्यं लोचनत्रयभूषितं॥ पातु नः
सर्वभूतेभ्यः कात्यायनि नमोस्तुते॥ ३०॥ ज्वालाकराल
मत्युग्रमशेषासुरसूदनं॥ त्रिशूलं पातु नो भीतेर्भद्रका
लि नमोस्तुते॥ १॥ हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या ज
गत्॥ सा घंटा पातु नो देवि पापेभ्यो नः सुतानिव॥ २॥ असु
रासृग्वसापंकचर्चितस्ते करोज्वलः॥ शुभाय खड्गो भव
तु चंडिके त्वां नतावयं॥ ३॥ रोगानशेषानपहंसि तुष्टा रु
ष्टा तु कामान्सकलानभीष्टान्॥ त्वामाश्रितानां न विपन्न
नराणां त्वामाश्रिता ह्याश्रयतां प्रयांति॥ ४॥ एतत्कृतं यत्

॥४८॥ दनं त्वयाद्य धर्मद्विषां देवि महासुराणां॥ रूपैरनै-
कैर्बहुधात्ममूर्तिं कृत्वांबिके तत्प्रकरोति कान्या॥५॥
विद्यासु शास्त्रेषु विवेकदीपेष्वाद्येषु वाक्येषु का च त्वद-
न्या॥ ममत्वगर्तेतिमहांधकारे विभ्रामयत्येतदतीव विश्वं
॥६॥ रक्षांसि यत्रोग्रविषाश्च नागा यत्रारयो दस्युबला-
नि यत्र॥ दावानलो यत्र तथाब्धिमध्ये तत्र स्थिता त्वं प-
रिपासि विश्वं॥७॥ विश्वेश्वरी त्वं परिपासि विश्वं विश्वा-
त्मिका धारयसीति विश्वं॥ विश्वेशवंद्या भवती भवंति
विश्वाश्रया ये त्वयि भक्तिनम्राः॥८॥ देवि प्रसीद परिपा-
लय नोरिभीतेर्नित्यं यथासुरवधादधुनैव सद्यः॥ पापा- ॥४८॥
नि सर्वजगतां च शमं नयाशु उत्पातपाकजनितांश्च म-

हापसर्गान्न ॥ ९ ॥ प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि ॥
त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव ॥ १० ॥ देव्युवाच ॥ ११ ॥
वरदाहं सुरगणा वरं यं मनसेच्छथ । तं वृणुध्वं प्रयच्छामि जग
तामुपकारकं ॥ १२ देवा ऊचुः ॥ १३ सर्वाबाधाप्रशमनं
त्रैलोक्यस्याखिलेश्वरि ॥ एवमेव त्वया कार्यमस्मद्वैरिविना
शनं ॥ १४ देव्युवाच ॥ १५ ॥ वैवस्वतेंतरे प्राप्ते अष्टाविंशतिमे
युगे ॥ शुंभो निशुंभश्चैवान्यावुत्पत्स्येते महासुरौ ॥ १६ ॥
नंदगोपगृहे जाता यशोदागर्भसंभवा ॥ ततस्तौ नाशयि
ष्यामि विंध्याचलनिवासिनी ॥ १७ ॥ पुनरप्यतिरौद्रेण रू
पेण पृथिवीतले ॥ अवतीर्य हनिष्यामि वैप्रचित्तांस्तु

दानवान् ॥१८॥ भक्षयंत्याश्चतानुग्रांवैप्रचित्तान्महासुरान् ॥
रक्तादंताभविष्यंतिदाडिमीकुसुमोपमाः ॥१९॥ ततोमांदेवताः
स्वर्गेमर्त्यलोकेचमानवाः ॥ स्तुवंतोव्याहरिष्यंतिसततंरक्तदं
तिकां ॥२०॥ भूयश्चशतवार्षिक्यामना[illegible]वृष्ट्यामनंभसि ॥
मुनिभिःसंस्तुताभूमौसंभविष्याम्ययोनिजा ॥२१॥ ततःशतेन
नेत्राणांनिरीक्षिष्यामियन्मुनीन् । कीर्तयिष्यंतिमनुजाःशता
सीमितिमांततः ॥२२॥ ततोहमखिलंलोकमात्मदेहसमुद्भवैः ॥
भरिष्यामिसुराःशाकैरावृष्टेःप्राणधारकैः ॥२३॥ शाकंभरी
तिविख्यातिंतदायास्याम्यहंभुवि ॥२४॥ तत्रैवचवधिष्यामिदु
र्गमाख्यंमहासुरं । दुर्गादेवीतिविख्यातंतन्मेनामभविष्य

ति॥२५॥ पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले। रक्षांसि
क्षययिष्यामि मुनीनां त्राणकारणात्॥२६॥ तदा मां मुनयः
सर्वे स्तोष्यंत्यानम्रमूर्तयः॥ भीमादेवीति विख्यातं तन्मे नाम भ
विष्यति॥२७॥ यदारुणाख्यस्त्रैलोक्ये महाबाधां करिष्यति॥ त
दाहं भ्रामरं रूपं कृत्वा संख्येयषट्पदं॥२८॥ त्रैलोक्यस्य हिता
र्थाय वधिष्यामि महासुरं॥ भ्रामरीति च मां लोकास्तदा स्तोष्यं
ति सर्वतः॥२९॥ इत्थं यदा यदा बाधा दानवोत्था भविष्यति॥ त
दा तदावतीर्याहं करिष्याम्यरिसंक्षयं॥३०॥ इति मार्कंडेयपुरा
णे सावर्णिके मन्वंतरे देवीमहात्म्ये देव्युवाच॥३१॥ एभिः स्त
वैश्च मां नित्यं स्तोष्यते यः समाहितः॥ तस्याहं सकलां बाधां भ्र

मयिष्याम्यसंशयं ॥३२॥ मधुकैटभनाशंच महिषासुरघातनं ॥ की
र्तयिष्यंतिये तद्वद्वधंशुंभनिशुंभयोः ॥३३॥ अष्टम्यांचचतुर्दश्यां
नवम्यांचैकचेतसः ॥ श्रोष्यंतिचैवयेभक्त्या मममाहात्म्यमुत्तमं ॥३४॥
नतेषांदुष्कृतंकिंचिद्दुष्कृतोत्थानचापदः ॥ भविष्यतिनदारिद्र्यंन
चैवेष्टवियोजनं ॥३५॥ शत्रुतोनभयंतस्यदस्युतोवानराजतः ॥
नशस्त्रानलतोयौघात्कदाचित्संभविष्यति ॥३६॥ तस्मान्ममैत
न्माहात्म्यंपठितव्यंसमाहितैः ॥ श्रोतव्यंचसदाभक्त्यापरंस्व
स्त्ययनंहितत् ॥३७॥ उपसर्गानशेषांस्तुमहामारीसमु
द्भवान् ॥ तथात्रिविधमुत्पातंमाहात्म्यंशमयेन्मम ॥३८॥ य ॥५०॥
त्रैतत्पठ्यतेसम्यक्नित्यमायतनेमम ॥ सदानतद्विमोक्ष्या

मि सान्निध्यं तत्र मे स्थितं ॥ ३९ ॥ बलिप्रदाने पूजायामग्नि
कार्ये महोत्सवे ॥ सर्वं ममैतच्चरितमुच्चार्यं श्राव्यमेव च ॥ ४० ॥
जानताजानता वापि बलिपूजां तथा कृतां ॥ प्रतीक्षिष्याम्यहं
प्रीत्या वह्निहोमं तथा कृतं ॥ ४१ ॥ शरत्काले महापूजा क्रियते या
च वार्षिकी ॥ तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः ॥ ४२ ॥
सर्वाबाधाविनिर्मुक्तो धनधान्यसुतान्वितः ॥ मनुष्यो मत्प्रसा
देन भविष्यति न संशयः ॥ ४३ ॥ श्रुत्वा ममैतन्माहात्म्यं तथा
चोत्पत्तयः शुभाः ॥ पराक्रमं च युद्धेषु जायते निर्भयः पुमा
न् ॥ ४४ ॥ रिपवः संक्षयं यांति कल्याणं चोपपद्यते ॥ नंदते च कु
लं पुंसां माहात्म्यं मम शृण्वतां ॥ ४५ ॥ शांतिकर्मणि सर्वत्र त

थादुःस्वप्नदर्शने॥ ग्रहपीडासु चोग्रासु माहात्म्यं शृणुयान्म
म॥४६॥ उपसर्गाः शमं यांति ग्रहपीडाश्च दारुणाः॥ दुःस्वप्नं
च नृभिर्दृष्टं सुस्वप्नमुपजायते॥४७॥ बालग्रहाभिभूतानां
बालानां शांतिकारकं॥ संघातभेदे च नृणां मैत्रीकरण
मुत्तमं॥४८॥ दुर्वृत्तानामशेषाणां बलहानिकरं परं॥ रक्षोभू
तपिशाचानां पठनादेव नाशनं॥४९॥ सर्वं ममैतन्माहात्म्यं
मम सन्निधिकारकं॥५०॥ पशुपुष्पार्घधूपैश्च गंधदीपैस्त
थोत्तमैः॥ विप्राणां भोजनैर्होमैः प्रोक्षणीयैरहर्निशं॥५१॥
अन्यैश्च विविधैर्भोगैः प्रदानैर्वत्सरेण या॥ प्रीतिर्मे क्रियते
सास्मिन्सकृत्सुचरिते श्रुते॥५२॥ श्रुतं हरति पापानि तथा

राग्यं प्रयच्छति ॥ रक्षां करोति भूतेभ्यो जन्मनां कीर्तनं मम ॥२३॥
नि सुद्धेषु चरितं यन्मे दुष्टदैत्यनिबर्हणं ॥ तस्मिञ्छ्रुते वैरिकृतं भ
यं पुंसां न जायते ॥२४॥ युष्माभिः स्तुतयो याश्च याश्च ब्रह्म
र्षिभिः कृताः ॥ ब्रह्मणा च कृतास्तास्तु प्रयच्छंति शुभां मतिं ॥
॥२५॥ अरण्ये प्रांतरे वापि दावाग्निपरिवारितः दस्युभिर्वा
वृतः शून्ये गृहीतो वापि शत्रुभिः ॥२६॥ सिंहव्याघ्रानुयातो
वा वने वा वनहस्तिभिः ॥ राज्ञा क्रुद्धेन चाज्ञप्तो वध्यो बंध
गतोपि वा ॥२७॥ आघूर्णितो वा वातेन स्थितः पोते महार्णवे ॥
पतत्सु वापि शस्त्रेषु संग्रामे भृशदारुणे ॥२८॥ सर्वाबाधा
सु घोरासु वेदनाभ्यर्दितोपि वा ॥ स्मरन्ममैतच्चरितं नरो

॥५२॥ मुच्यते संकटात् ॥२९॥ मम प्रभावात्सिंहाद्या दस्यवो वैरिण
स्तथा। दूरादेव पलायंते स्मरतश्चरितं मम ॥३०॥ ऋषिरुवा
च ॥३१॥ इत्युक्त्वा सा भगवती चंडिका चंडविक्रमा ॥ पश्य
तामेव देवानां तत्रैवांतरधीयत ॥३२॥ तेपि देवा निरातंकाः
स्वाधिकारान्यथा पुरा ॥ यज्ञभागभुजः सर्वे चक्रुर्विनि
हतारयः ॥३३॥ दैत्याश्च देव्या निहते शुंभे देवरिपौ यु
धि ॥ जगद्विध्वंसिनि तस्मिन् महोग्रेतुलविक्रमे ॥३४॥
निशुंभे च महावीर्ये शेषाः पातालमाययुः ॥३५॥ एवं
भगवती देवी सा नित्यापि पुनः पुनः ॥ संभूय कुरुते ॥५२॥

भूपजगतः परिपालनं ॥ ६६ ॥ तयेतन्मोह्यते विश्वं सैव
विश्वं प्रसूयते । सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्र
यच्छति ॥ ६७ ॥ व्याप्तं तयेतत्सकलं ब्रह्मांडं मनुजेश्वरं ॥
माहाकाल्या महाकाले महामारी स्वरूपया ॥ ६८ ॥ सैव
काले महामारी सैव सृष्टिर्भवत्य जा ॥ स्थितिं करोति
भूतानां सैव काले सनातनी ॥ ६९ ॥ भवकाले नृणां सैव
लक्ष्मी वृद्धिं प्रदा गृहे । सैवाभावे तथा लक्ष्मी विनाशा
योपजायते ॥ ७० ॥ स्तुता संपूजिता पुष्पैर्धूपगंधादिभि

॥५७॥ स्तथा॥ ददातिवित्तंपुत्रांश्वमतिंधर्मेतथाशुभां॥७१॥
इतिमार्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवीमहात्म्येशुं
भनिशुंभवधःसमाप्तः १२ ऋषिरुवाच॥७२॥एत
त्तेकथितंभूपदेवीमाहात्म्यमुत्तमं॥७३॥एवंप्रभा
वासादेवीययेदंधार्यतेजगत्॥विद्यातथैवक्रिय
तेभगवद्विष्णुमायया॥७४॥तयात्वमेषवैश्यश्च
तथैवान्येविवेकिनः॥मोह्यंतेमोहिताश्चैवमोहमे
ष्यंतिचापरे॥७५॥तामुपैहिमहाराजशरणंप ॥५३॥

रमेश्वरी॥ आराधितासैवनृणांभोगस्वर्गापवर्गदा॥७६॥ मार्कंडेयउवा
च॥७७॥ इतितस्यवचःश्रुत्वासुरथःसनराधिपः॥ प्रणिपत्यमहाभागंत
मृषिंसंशितव्रतं॥७८॥ निर्विण्णोतिममत्वेनराज्यापहरणेनच॥ जगामसद्य
॥७९॥ स्तपसेसचवैश्योमहामुने॥ संदर्शनार्थमंबायानदीपुलिनसंस्थितः॥ सच
प वैश्यस्तपस्तेपेदेवीसूक्तंपरंजपन्॥८०॥ तौतस्मिन्पुलिनेदेव्याःकृत्वामूर्तिं प
महीमयीं॥ अर्हणांचक्रतुस्तस्याःपुष्पधूपाग्नितर्पणैः॥८१॥ निराहारौ
यताहारौतन्मनस्कौसमाहितौ॥ ददतुस्तौबलिंचैवनिजगात्रासृगु
क्षितं॥८२॥ एवंसमाराधयतोस्त्रिभिर्वर्षैर्यतात्मनोः॥ परितुष्टाजग
द्धात्रीप्रत्यक्षंप्राहचंडिका॥८३॥ देव्युवाच॥८४॥ यत्प्रार्थ्यतेत्वयाभू
पत्वयाचकुलनंदन॥ मत्तस्तत्प्राप्यतांसर्वंपरितुष्टाददामितत्॥८५॥
मार्कंडेयउवाच॥८६॥ ततोवव्रेनृपोराज्यमविभ्रंश्यन्यजन्मनि॥ ॥

अत्रैचैवनिजंराज्यंहतशत्रुबलंबलात्॥ ८७॥सोपिवैश्यस्ततोज्ञा
नंवव्रेनिर्विण्णमानसः॥ममेत्यहमितिप्राज्ञः संगविच्युतिकार
कं॥ ८८॥ देव्युवाच॥ ८९॥स्वल्पैरहोभिर्नृपतेस्वंराज्यंप्राप्स्यतेभवान्॥
९०॥हत्वारिपुनस्खलितंतवतत्रभविष्यति॥ ९१॥मृतश्चभूयः
संप्राप्यजन्मदेवाद्विवस्वतः॥ ९२॥सावर्णिकोनाममनुर्भवान्भुवि
भष्यति॥ ९३॥वैश्यवर्यत्वयायश्चवरोस्मत्तोभिवांछितः॥ ९४
तंप्रयच्छामिसंसिध्यैतवज्ञानंभविष्यति॥ ९५॥मार्कंडेयउवा
च॥ ९६॥इतिदत्वातयोर्देवीयथाभिलषितंवरं॥ बभूवांतर्हिता
सद्योभक्त्यातााभ्यामभिष्टुता॥ ९७॥एवंदेव्यावरंलब्ध्वासुरथः॥ ॥२४॥
क्षत्रियर्षभः॥सूर्याज्जन्मसमासाद्यसावर्णिर्भवितामनुः॥ ९८॥
इतिदत्वातयोर्देवीयथाभिलाषितंवरं॥ बभूवांतर्हितास

द्योभक्तयाताभ्यामभिष्टुता॥ ९९ ॥ एवं देव्या वरं लब्ध्वा सुरथः क्ष
त्रियर्षभः॥ सूर्याज्जन्म समासाद्य सावर्णिर्भविता मनुः॥ ७००॥
इति मार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये समाप्तं
१३ ओंम् अहं रुद्रेभिर्वसुभिश्चरामीति सूक्तं जपन्॥
श्री महाकाली महालक्ष्मी महासरस्वती देवताः प्रसन्नाः सं
तु॥ लं पृथिव्यात्मकं गंधं समर्पयामि॥ हं आकाशात्मकं
पुष्पं स० यं वाय्वात्मकं धूपं स० रं अग्न्यात्मकं दीपं स०॥
वं अमृतात्मकं नैवेद्यं समर्पयामि॥ यं रं लं वं हं पंचतत्वा
त्मकं मंत्रपुष्पं समर्पयामि॥ श्रीमहाकाल्यै नमः श्री
महालक्ष्म्यै नमः श्रीसरस्वत्यै नमः छ्ळ छ्ळ

॥५५॥

॥इतिसप्तशतीपाठःसमाप्तः॥

॥५५॥

